# श्रीविशाखविजयकाव्यम् ।



वञ्चिमहाराज्ञ्याः सि. ऐ. बिरुदशालिन्याः

श्रीलक्ष्मीदेव्याः प्रियतमेन

एस्. ऐ., एफ्. एम्. यू., एम्. आर्. ए. एस्., एफ्. आर्. एछ्. एस्.

इति बिरुदशालिना

श्रीकेरळवर्मपर्पराजेन

विरचितं

---

अनन्तशयनस्थराजकीयसंस्कृतविद्यामन्दिराध्यक्षेण

त. गणपतिशास्त्रिणा

कृतया टिप्पण्या साकं कृतम् ।

---

अनन्तशयने

'संस्कृतभास्कर'मुद्रालये मुद्रितम् ।

---

१९००.

DEDICATED

TO

**HIS HIGHNESS**

ṢRÎ-PADMAÑÂBHA-DÂSA-VANCHI-PÂLA

**ṢRÎ-RÂMAVARMÂ**

KULASEKHARA KIRITAPATI MANNE SULTAN MAHARAJA RAJA

RAMA RAJA BAHADAR SHAMSHER JUNG,

G. C. S. I., F. M. U., M. R. A. S.,

*Officier de l' Instruction Publique,*

**MAHARAJA OF TRAVANCORE,**

The worthy Successor and Nephew of
the Hero of this Poem.

॥ श्रीः ॥

# निवेदना.

योऽसौ स्मृतीतिहासकाव्यालंकारसारज्ञ आङ्गलभाषाविचक्षणाग्रणीरनवद्यविद्यानुरूपशीलचारित्रपवित्रः पण्डितप्रेयान् विशाखानक्षत्रजन्मना विशाख इति व्यपदिष्टः जि. सि. एस्. ऐ. इत्यादिबहुबिरुदाङ्कितो देवः श्रीमान् रामवर्ममहाराजः स्वीकृत्य पञ्च हायनान् केरलदेशान्तर्गतवञ्चिमण्डलमहाराज्यभारं १८८५ तमे ख्रिस्तवर्षे यशःशेषतामयासीत्, तमधिकृत्य तद्भागिनेय्या वञ्चिमण्डलमहाराज्ञ्याः सि. ऐ. बिरुदशालिन्याः साहित्यसंगीतविशारदायाः श्रीमत्या लक्ष्मीदेव्याः प्रियतमेन शब्दब्रह्मतत्त्ववेदिना सि. एस्. ऐ., एम्. एम्. यू. इत्यादिबिरुदशालिना श्रीमता केरलवर्मपर्पराजेन सर्गविंशत्यात्मकं "विशाखविजय"संज्ञं किमपि महाकाव्यं प्रणीतम्. अत्र जन्मप्रभृतयस्तीर्थयात्राकनकतुलापुरुषदानावसाना नायकस्य वृत्तान्ता वितत्य प्रतिपादिताः, प्रसङ्गवशात्तु तज्ज्येष्ठभागिनेयादीनां कवेश्च. आसादितवन्तश्चात्रान्तेरणान्तिमान् पञ्चषानन्ये सर्गाः कथानायकस्यावलोकनानुग्रहम्. ग्रन्थे चास्मिन् विशाखस्योत्कर्षो यात्रा वा वर्ण्यत इति कृत्वा "विशाखविजय" इति व्यपदेशः कृतः, उत्कर्षाभिधायित्वाद् विजयशब्दस्य महापुरुषसंबन्धिनि यात्रामात्रे प्रयोगदर्शनाच्च.

अस्य दश सर्गाः १८८९ तमवर्षे मुम्बापुरस्थ'निर्णयसागर'यन्त्रालये मुद्रिताः. सम्प्रति तु समुचितसंस्क्रियामनाथं कृत्वा कृत्स्नमिदं काव्यं लघुटिप्पणीसचिवं मुद्रयित्वा प्रकाश्यते.

अलं तावदेतत् काव्यं सकृदुपदेशमात्रसुगमाभिधेयमुल्ललितपदगुम्फितमिति व्युत्पित्सूनाम्, अनवद्यशब्दशोभि सुश्लिष्टार्थं चेति शाब्दिकरासिकानां, रसोचितवक्रोक्तियुक्तं लक्षणानतिवर्ति चेति सहृदयानां च परितोषमुपजनयितुम्

यद्यप्येवंविधा अस्य वर्षविंशतिपूर्वजाः "कंसवध"चम्पूप्रभृतयो बह्व्य एतत्कवेः सन्ति कृतयः, तथापि कृतावेतस्यां १८८४ तमवत्सरलब्धोद्-यायां द्राक्षायामिव स्वादिष्ठः कोऽपि परमः पाकः. न वा काचिदियमाश्च-र्यभूमिः, यदसाधारणशक्तिभाज एतावन्तमनेहसं काव्यशास्त्रादिकमशीत-करस्य परिचितवतो नैपुण्यपरमकाष्ठाधिरूढस्य कवेः परिपाकेमा भारतीति अयं वश्यवागिति रसिकहृदयसंवादीति महाकविरिति सहृदयान् प्रति न मनागपि निवेदनमपेक्षितं मद्विधानां साक्षात्कविसंस्तवमहिम्ना प्रचुरतद्गुणा-भिज्ञंमन्यानां, यतस्तत्र विषयेऽस्यैव सूक्तयो वितन्वन्त्यहमहमिकाम्.

किं बहुना; पुरा खल्वस्मिन् भारतवर्षे तावान् महाकविशिल्पस्यो-पचयोऽभवत्, यन्महिम्ना संस्कृतभाषापचयापादकेऽप्यस्मिन् काले जागर्त्येव तत्रतत्र सहृदयगोष्ठी. अद्यत्वे पुनः कविशिल्पकथा तथा लुप्यमानतामनुभवति, यथा नव्यकाव्यास्वादलिप्सा सुमनसामवग्रहकालिकचातकोदन्यया साकमा-बध्नाति मैत्रीम्.

एवं स्थिते काव्ययोगक्षेमधुरंधराः सहृदयाः कृतिमिदंप्रकारामे-नामाधुनिकमहाकवेर्निर्भरप्रणयोपपादनेन प्राक्कृतिनिर्विशेषमवश्यमनुगृह्णीयु-रिति दृढं विश्वसिमि.

वञ्चिमण्डलमहाराजाश्रितः,

**त. गणपतिशास्त्री.**

१.-१ कंसवधः, २ शृङ्गारमञ्जरी, ३ क्षमापणसहस्रम्, ४ पादारविन्दशत-कम्, ५ गणेशादिविषयस्तोत्राणि, ६ प्रणामशतकम्, ७ व्याघ्रालयेशशतकम्, ८ विक्टोरियाचरितसंग्रहः, ९ तुलाभारशतकम्, इत्येतावन्तोऽद्यावधि निर्मिता ग्रन्थाः. प्रथमः पञ्चमादयश्च मुद्रणेन प्रकाशिताः ।

२.-अद्य कवेर्वर्तमानं वयः षट्पञ्चाशत् ।

श्रीरस्तु.

# श्रीविशाखविजयः

प्रथमः सर्गः.

श्रीमान् विशाखर्क्षभवो विभाति
  श्रीवञ्चि[1]भूपालकुलावतंसः ।
श्रीपद्मनाभाङ्घ्रिसमर्पितात्मा
  श्रीरामवर्मा कुलशेखरो[2]ऽयम् ॥ १ ॥

अमुष्य बाल्यात् प्रभृति प्रवृत्तिं
  सतां समाजेन सदानुकार्याम् ।
प्रासङ्गिकीरन्यकथाश्च वक्ष्ये
  यथामनीषं विदुषां मुदेऽहम् ॥ २ ॥

एतस्य माता महिता गुणौघैः
  सा रुक्मिणी सारधियां वरिष्ठात् ।
स्ववल्लभाद्[3]वल्लभदेशनाथा-
  ल्लेभे सुतान् पञ्च सुताद्वयं च ॥ ३ ॥

वशं गतौ शैशव एव काल-
  स्यैका तदीया तनया सुतश्च ।
शिष्टैरपत्यैः शिवसेवया सा
  विद्याविनोदैश्च दिनान्यनैषीत् ॥ ४ ॥

---

१. वञ्चीति जनपदविशेषः (Travancore) २. वञ्चिमहाराजानां सामान्यसंज्ञेयम्. ३. तिरुवल्लाख्यदेशाधिपात्.

तस्यास्तनूजश्चरमोऽयमिन्धे
रामो द्वितीयोऽचरमः पटिम्ना ।
मासद्वयं मातुरुरोजदुग्ध-
माधुर्यमास्वाद्यमभून्न यस्य ॥ ५ ॥

धात्रीकरे पुष्टिमितः कृतज्ञो
धात्रीमवत्येष धृतावधानः ।
बाल्ये गदैर्यं बहुशोऽभिभूतं
वात्सल्यतोऽत्रायत वासुदेवः ॥ ६ ॥

मातामहः [2]शोणहिरण्यशैल-
देशाधिपोऽमुं शिशुमष्टवर्षम् ।
काले स्वकीयान्वयरक्षितारं
विश्वस्य वैकुण्ठमगात् कृतार्थः ॥ ७ ॥

स्वातिप्रसूतः कविसार्वभौमः
स्वातिप्रतापेन नृपः प्रतीतः ।
बाल्येऽप्यसाधारणमस्य धैर्यं
धीरोऽवगार्याधिकमाननन्द ॥ ८ ॥

मातृष्वसारं महितप्रतापे
महीपतौ वन्दितुम्[3]आजिहाने ।
कदापि खेलन्नचलः स्खलित्वा
बालोऽयमासीत् पतनक्षतोष्ठः ॥ ९ ॥

अतिप्रचण्डं क्षितिपालदण्ड-
माशङ्क्य वित्रस्ततरां स्वधात्रीम् ।
आश्वास्य हस्तेन यथोपचार-
माश्वास्यमार्द्रास्रगसौ जुगूहे ॥ १० ॥

१. भूमिमुपमातरं च. २. चङ्गनाशेर्याख्यदेशनाथः. ३. आगच्छति सति.

एवं निगूह्य क्षतजां निजार्त्ति
धीरः स्वभात्र्या अभयं प्रदाय ।
कौमारकेऽपि प्रकटीचकार
सहिष्णुतामेष दयालुतां च ॥ ११ ॥

कौमारकेऽप्युज्झितचापलोऽयं
लीलास्वपि स्पष्टगभीरभावः ।
सतां मतोऽभूद् गुरुदेवभक्त्या
सत्यानुसृत्यादृतया च मत्या ॥ १२ ॥

स्वस्त्रीयमेनं चरमं कुमारं
दशाब्दमन्यादृशशेमुषीकम् ।
अवेक्ष्य हृष्यन्नवनीवलारिः
स रामवर्मा त्रिदिवं जगाम ॥ १३ ॥

सभ्रातृको मात्रनुजस्य तस्य
पित्र्याणि कर्माण्ययमन्वतिष्ठत् ।
तादृग्वयःस्थोऽपि विशाखराजः
पित्र्यादि कृत्यं श्रदधत्त नित्यम् ॥ १४ ॥

श्रीपार्वती क्षेमकृतेऽस्य माता-
मह्याः स्वसा मानधना कनिष्ठा ।
निर्मायभक्त्या निजदैवसेवां
निर्माय पुण्यान्यचरत् पुरूणि ॥ १५ ॥

मातुर्द्वितीयावरजो मनस्वी
मार्तण्डवर्मा महनीयधर्मा ।
विद्यासु सर्वासु विदग्धमेनं
विधातुमाधत्त विशिष्य यत्नम् ॥ १६ ॥

१. निर्व्याजभक्त्या.

कुमारकेऽस्मिन् गुरुपक्षपाता
गुणातिरेकाद् गुरवो बभूवुः ।
स्वसोदरानत्यशयिष्ट तेषा-
मनुग्रहादेष धुतव्यळीकात् ॥ १७ ॥

पौगण्ड[1] एवैष कुशाग्रबुद्धि-
र्देशीयभाषास्वभवत् प्रवीणः ।
साधारणाध्यापकसाध्यमेत-
स्याध्यापनं तावदभूत् समाप्तम् ॥ १८ ॥

ततः स्वतातादयमध्यगीष्ट
ग्रन्थाननेकानचिरेण धीमान् ।
अभूदभिज्ञैरभिनन्दनीय-
प्रज्ञाबलश्चानुपनीत एव ॥ १९ ॥

मान्यं सतां माधवनामधेयं[2]
ख्यातं महाराष्ट्रमहीसुरेन्द्रम् ।
अध्यापनार्थं भगिनीसुताना-
मानाय्य मार्तण्डनृपो न्ययुङ्क्त ॥ २० ॥

अन्तेवसत्स्वस्य विशाखराजो
विशालबुद्धिर्विषयाननेकान् ।
अधीत्य विख्यातिमगाद्विशिष्टां
यथा भरद्वाजसुतस्य जिष्णुः ॥ २१ ॥

अध्यापकादभ्यधिको बभूव
बुद्ध्यातिगम्भीरविशालयायम् ।
विस्माययामास यया समस्तान्
विस्तारयंस्तस्य च कीर्तिमुच्चैः ॥ २२ ॥

---

१. 'पौगण्डः पञ्चमादब्दादर्वाक् च दशमाब्दतः' २. Raja Sir T. Madhava Rau.

सङ्गीतविद्यामपि सर्वहृद्या-
मङ्गीचकारायमयत्नमेव ।
अधीतवान् वैद्यकमप्यगाध-
स्वधीबलेनाधिकपुण्यमूलम् ॥ २३ ॥

कलाकलापेन परिष्कृतात्मा
रराज राजायमुदारवृत्तः ।
मार्तण्डलब्धेन बुधोपजीव्यो
गुरुप्रहर्षं वसुना विधाय ॥ २४ ॥

व्यायामशातावयवो युवायं
प्रलम्बबाहुः परिणाहिवक्षाः ।
गम्भीरताधृष्यतमोऽपि सौम्यः
सम्यङ्ममानन्दमदाज्जनानाम् ॥ २५ ॥

वयस्ययं पञ्चदशेऽतिवृत्ते
द्विजातियोग्येन पथोपनीतः ।
पुरोधसा धारितयज्ञसूत्रः
पुरौकसामुत्सवहेतुरासीत् ॥ २६ ॥

आन्दोलिकोद्धेन चमूपरीतं
तदुत्सवान्ते कनकोज्ज्वलेन ।
मेने जनः सञ्चरमाणमेनं
भूयोऽपि रामावतरं मुरारेः ॥ २७ ॥

गतेऽथ मासद्वितये कृतार्था
सा पार्वती श्रीपुरमाससाद ।
दृष्ट्वा कुमारं धृतशक्तिमेनं
वीरं विशाखं विबुधावनाय ॥ २८ ॥

---

१. भूपश्चन्द्रश्च. २. वृत्त चरित्रं वर्तुलता च. ३ मार्त्तण्ड म र्त्तण्डवर्मराजः सूर्यश्च. ४. बुधो विद्वान् देवश्च. ५. गुरूणां विद्योपदेष्टॄणां प्रहर्षं, अथ च गुरुं महान्तं प्रहर्षम्. ६. धनेन किरणेन च. ७. प्रशस्तयान्दोलिकया. ८. राज्ञी दुर्गा च. ९. महीमन्मथं शिवपुत्रं च. १०. शक्तिः सामर्थ्यमायुधविशेषश्च. ११. विशाखनक्षत्रजातं स्कन्दं च. १२. विबुधाः विद्वांसः देवाश्च.

अथाभवद्वत्सरमात्तदीक्षः
पितृप्रियार्थं पठितादिकाव्यः ।
विशाखराड् वर्जितवर्जनीयो
जितेन्द्रियाणां धुरि कीर्तनीयः ॥ २९ ॥

अपत्यलाभाय ततो भगिन्या
लक्ष्म्याश्चतुर्विंशतिवत्सरायाः ।
कुशेशयाक्षं कुलदैवतं स्वं
प्राज्ञाग्रणीः प्रार्थयतैष भक्त्या ॥ ३० ॥

अथ प्रसादेन हरेरमुष्य
मार्तण्डवर्माजनि भागिनेयः ।
विद्वन्मणेः शोणहिरण्यशैल-
राजन्यवंशोद्भवराजराजात् ॥ ३१ ॥

ततो द्वितीयोऽजनि भागिनेयो
रामाभिधानो युवराडिदानीम् ।
प्रसूय मूलर्क्षजमेनमाशु
प्रसूरमूनोज्झदरिष्टकष्टात् ॥ ३२ ॥

शुचाकुले राजकुले महारा-
ण्मार्तण्डवर्मा महतां मतेन ।
कन्याद्वयं बन्धुजनान्वयात् स्वी-
चक्रे विशाखेरितयैव रीत्या ॥ ३३ ॥

विशाखवैदुष्यमवेक्ष्य हृष्यन्
विशाम्पतिर्माधवमाधिपत्ये ।
देशैकदेशस्य विधाय धीरं
प्रधानकर्मण्यचिराव्ययुङ्क्त ॥ ३४ ॥

ततो विशाखाग्रजरामवर्मा
निजाग्रजं केरळवर्मराजम् ।

[1]अकल्यमालक्ष्य जनानुमत्या
जग्राह तद्यौवनृपाधिकारम् ॥ ३५ ॥
तस्यानुजन्मा रविवर्मनामा-
प्रावर्तता[2]र्त्तितया विहस्तः ।
अशक्तिहेतोरनुजेन भक्त्या
स्वकार्यभारेषु वितीर्णहस्तः ॥ ३६ ॥
विशाखराड् विश्वजनीनवृत्तिः
कनिष्ठसोदर्यपदे स्थितोऽपि ।
चतुर्षु तेषूर्जितशासनोऽभूद्
वेदेष्वथर्वेव निगूढभावः ॥ ३७ ॥
विहाय सङ्गं विषयेषु देहं
जहावथो वल्लभदेशनाथः ।
अनूनभक्त्या विहितानुवृत्तिं
तनूजमन्त्यं बहुशोऽनुगृह्य ॥ ३८ ॥
स राजराजो निजनन्दनाभ्या-
मानन्दितोऽपि क्षितिपार्भकाभ्याम् ।
राज्ञ्याः प्रियाया बत विप्रयोग-
मपारयन् सोढुमवाप नाकम् ॥ ३९ ॥
तस्य द्वितीयोऽवरजातनूजः
शिष्यः प्रियः केरळ[3]वर्मनामा ।
राजालयं शैशव एव नीतः
प्रीतिं नृपाणामतनोद्विनीतः ॥ ४० ॥
तस्य स्वशिष्यस्य विशिष्य रक्षां
मार्त्तण्डवर्मप्रभुमार्त्तबन्धुम् ।

---

१. राजकार्येष्वशक्तं रोगिणं वा.  २. अकल्यतया.  ३. एतत्काव्यकर्ता.

द्वित्रैरहोभिर्दिवमारुरुक्षु-
र्वरं ययाचे किल राजराजः ॥ ४१ ॥

लक्ष्म्यास्ततः स्वीकृतभागिनेय्याः
कराम्बुजं केरळवर्मणैव ।
व्यवस्यतो ग्राहयितुं नृपस्य
मतं विशाखो भृशमभ्यनन्दत् ॥ ४२ ॥

गुत्रावनीशः महि रामवर्मा
वरान्तरायार्पणमाचकाङ्क्ष ।
स्वभागिनेय्याः कुलशेखरस्तु
मतं विशाखस्य किलानुमेने ॥ ४३ ॥

मार्त्तण्डराजेन्द्रनियुक्तमन्त्रि-
प्रवर्तितोद्वाहमहोज्ज्वलौ तौ ।
मकौतुकौ कौतुकवानतुष्यद्
वधूवरौ वीक्ष्य विशाखराजः ॥ ४४ ॥

मणिप्रकाण्डे निजमातुलाय
हूणाधिराज्ञ्या प्रहिते प्रसादात् ।
निर्माय पद्यं नृप एष हृद्यं
मद्यः सतां मोदमदाददभ्रम् ॥ ४५ ॥

अद्धान्तरायानवधीर्य धीरः
शुद्धान्तरात्मा जगृहे विशाखः ।
शुद्धान्तमाचारपरम्परायाः
सिद्धान्तवेदी हृदयानुकूलम् ॥ ४६ ॥

मार्तण्डवर्मा कुलशेखरोऽस्य
महामतित्वं मनसाभिनन्द्य ।
कल्याणमाशास्य च कालधर्म-
मधर्ममर्मीविदथ प्रपेदे ॥ ४७ ॥

---

१. पापाचारदर्शयिता.

अथ पुनरपि दीक्षामास्थितः श्रीविशाखो
विधिवदनयदब्दं श्रद्धया श्राद्धदायी ।
स च विपुलमतीनामग्रगोऽस्याग्रजन्मा
सचिवपरिवृढाद्यैराधिराज्ये न्यधायि ॥ ४८ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
सर्गो विश्रुतनेतृशैशवकथाप्रस्ताविवाग्विस्तरै-
राद्यस्तस्य कृतौ विशाखविजये हृद्योऽनवद्यो गतः ॥ ४९ ॥

इति श्रीविशाखविजये प्रथमः सर्गः ।

## द्वितीयः सर्गः ।

श्रीविशाखवसुधावल्लवैरी
यौवराज्यमधिगम्य गभीरः ।
भावुकाय भुवनेश्वरमन्त्र-
भावयन् प्रववृते निजकृत्ये ॥ १ ॥

अग्रजन्मसु कुशाग्रमनीषः
प्रेमभक्तिभरितोऽभवदेषः ।
मध्यमे सबहुमानविशेषः
पार्थिवेऽपगतमत्सरदोषः ॥ २ ॥

मुक्तिसाधनमुशन्ति यदेकं
ज्ञानमेव तदभीप्सुरभीक्ष्णम् ।
विश्रुतैर्विबुधवर्यसमाजैः
सौहृदं सपदि संजगृहेऽसौ ॥ ३ ॥

आदधाद्विविधमध्यवसायं
नाक्षिपत् क्षणमपीह वृथा रम् ।

पापकारणमवाप न जातु
क्ष्मापलोकसुलभालसशीलम् ॥ ४ ॥

बद्धमोदमितिहासपुराणा-
दादिराजचरितान्यधिगच्छन् ।
वृद्धसेवनरतः कुलधर्मं
नात्यलङ्घयदयं क्वचनापि ॥ ५ ॥

सर्ववस्तुपरमार्थविवित्सा-
प्रेर्यमाणहृदयः प्रतिवेलम् ।
दैवसृष्टिगतमद्भुतजालं
सावधानमगवेषयदेषः ॥ ६ ॥

सत्पथाद् व्यतिययौ न कदापि
द्रुह्यति स्म तमसे विपुलौजाः ।
लोकबन्धुरभजद् दिनचर्या-
मर्यमेव नियमेन विशाखः ॥ ७ ॥

दूरतः परिजहार महात्मा
दुष्टचेष्टितरतैः सहवासम् ।
साधुसंगमसुधारसधारा-
लम्पटोऽमनुत तं विषकल्पम् ॥ ८ ॥

पद्मनाभमभजत् परिहीण-
च्छद्मना मनसि भक्तिभरेण ।
तस्य शक्तिममितामवगच्छ-
न्नात्मनः सकलभावुकदात्रीम् ॥ ९ ॥

स्वस्वधर्मनिरतान् मतभेदे-
ऽप्यभ्यनन्ददनवद्यचरित्रान् ।
नास्तिकेषु पुनरुत्पथगामि-
ष्वादधावयमसीममभर्षम् ॥ १० ॥

धीरधीरयमयन्त्रयदन्तः
  सन्ततं बहिरभिद्रवणेच्छुम् ।
दुर्दमं विषयिघोटकवर्गं[1]
  प्रग्रहैः शमदमात्मभिरुच्चैः ॥ ११ ॥

प्रत्युषःपुरत एव विबुध्य
  प्रत्यहं कलितकाल्यविधेयः ।
सञ्चचार नगराद् बहिरारु-
  ह्याश्वरत्नमथ पुष्यरथं वा ॥ १२ ॥

जातु काल्यपवमाननिषेवी
  कौतुकादयमटन्नटवीषु ।
तीर्थशैलसविधे[2] स्पृहणीयं
  देशमावसथयोग्यमपश्यत् ॥ १३ ॥

तत्र सद्म निरमापयदुर्वी-
  वृत्रशत्रुरचिरेण विशालम् ।
यत्र पूर्वमपि धृष्णुरशस्त्रो
  वित्रसन् न चरति स्म तरक्षोः ॥ १४ ॥

सौध एष रमणीयसमीरो
  दर्शनीयतमदेशपरीतः ।
उच्चकैः सकलशैलनिकाय्यान्
  न्यक्चकार नगरान्तिकभाजः ॥ १५ ॥

मासिमासि कतिचिद् दिवसानि
  स्वैरमत्र विहरन् युवराजः ।
मद्रसंज्ञपुरवर्यदिदृक्षां
  सोदराय निजगाद कदाचित् ॥ १६ ॥

---

१ इन्द्रियाश्ववर्गम्.   २ तीर्थशैलनामकगिरिसमीपे.

रामवर्मकुलशेखरभूपो
मन्त्रिमाधवमतानुविधायी ।
सोदरेण चिरकाङ्क्षितयात्रा-
मादरेण किल तामनुमेने ॥ १७ ॥

पद्मनाभमभिवन्द्य
प्रस्थितोऽथ नगराद् युवराजः ।
स्वप्रजाभिरधिमार्गमसीम-
प्रेमभक्तिभरिताभिरसेवि ॥ १८ ॥

पुण्डरीकपुरमेत्य पुरारिं
पूर्णभक्तिरभिपूज्य विशाखः ।
अष्टमीमहमनीक्षितपूर्वं
दृष्टवानिह महाजनजुष्टम् ॥ १९ ॥

अध्वमध्यगतदैवतगेहे-
ष्वाहितोपहृतिराशु चरिष्णुः ।
पिप्रिये प्रकृतिभिः प्रणयेन
प्रार्थ्यमानकुशलः पृथिवीशः ॥ २० ॥

लङ्घितस्वविषयोत्तरसीमः
सीमलङ्घिचिरजातदिदृक्षैः ।
मद्रभर्तृपुरुषैर्मतिमद्भि-
र्मान्यते स्म महनीयगुणोऽयम् ॥ २१ ॥

वातकित्वमहृत स्तुतिकर्तु-
र्मातृदत्ततनयस्य कवेर्यः ।
नन्दनन्दनमथैष मुदा तं
वन्दते स्म गुरुवातनिकेतम् ॥ २२ ॥

१ व्याघ्रपुरमिति प्रसिद्धं केरळीयं पुरम्. २ वातरोगित्वम्. ३ प्रक्रियासर्वस्वादिकर्तुर्नारायणभट्टस्य. ४ 'गुरुवायूर्' नामकपुरवासिनम्.

अद्यरुक्षदयमाधुनिकानां
बुद्धिकौशलविवर्त्तमथोच्चैः
वह्नितोयमयवाहयुगोढं
वाहनं किमपि विस्मयनीयम् ॥ २३ ॥[1]

अद्य मन्त्रिपदभूषणभूत-
स्यात्मनः प्रियसखस्य विशाखः ।
रामवैष्णवमहीसुरमौले-
र्बुद्धिगौरवमबुद्ध तदेव ॥ २४ ॥

भूरिवासरगणैरविलङ्घ्यं
भूवलारिग्यनं समतीत्य ।
आससाद दिवसैरुपपञ्चैः
प्रान्तदेशमथ भद्रपुरस्य ॥ २५ ॥

सत्कृतः सकुतुकैरथ हृष्टै-
स्तत्र कैश्चिदधिकारधुरीणैः ।
मानितो बहुभिरन्यजनैश्च
प्राविशत् पुरवरं युवराजः ॥ २६ ॥

मद्रभर्तृहृदयेऽथ समुद्रे
भद्रकीर्तिसुषमो नृपचन्द्रः ।
विस्मयप्रणयकौतुकवीची-
रुत्तरल्यकुरुतोदयशाली ॥ २७ ॥

सारलीनमनसोऽस्य मनीषा-
सारलीं कलयतामसमानाम् ।
केरलीयपुरुषेष्ववहेला
वैरलीमगमदन्यजनानाम् ॥ २८ ॥

---

1 Honourable V. Ramiengar. २ सङ्ख्ययाव्ययेति (२. २ २५.) समासः.

तत्र पण्डितसमाजगतस्य
ज्ञानसिन्धुमवगाह्य गभीरम् ।
मद्रपः सपरितोषममुष्य
स्थानमृद्धबहुमानमयच्छत् ॥ २९

अद्य यावदिह केरळसूरि-
ष्वध्यगच्छदयमेव यदेकः ।
माधवोऽप्यलभतास्य गुरुः स-
न्नीदृशं पदमितः परमेव ॥ ३० ॥

वासराणि कतिचिद् वसुधाया
वासवोऽधिवसति स्म पुरीं ताम् ।
कूलमुद्वहकुतूहलसिन्धु-
प्रेरितः प्रतिनवाद्भुतदर्शी ॥ ३१ ॥

स्वापतेयनिचयप्रणिदान-
प्रापणीयविविधात्थभृतेषु ।
भूपतेरजनि कौतुकमुच्चै-
रापणेषु पणनीयगुणेषु ॥ ३२ ॥

निष्कनिष्कलनयन्त्रमधृष्यं
दुर्गमेष विपुलायुधशालाम् ।
आयसं जलधिवर्त्म च पश्य-
न्नन्यदप्यभिननन्द सुमद्रम् ॥ ३३ ॥

तत्र कृत्रिमवनान्तरवाप्या
राजमानसमदभ्रमराळ्या ।
जातकौतुकमतीव वितेने
राजमानसमदभ्रमराळ्या ॥ ३४ ॥

---

१ मद्रसम्राड्दिम.

सञ्जहर्ष तत एष नृसिंहः
पिञ्जरद्युतिसटं सकुटुम्बम् ।
कुञ्जरादिभयदं मृगराजं
पञ्जरान्तरनिरुद्धमवेक्ष्य ॥ ३५ ॥

पुण्डरीकनिकरैः कमलानां
मण्डलैश्च विविधाण्डजषण्डैः ।
मण्डितं क्षितिपतिर्वनराशिं
पण्डितः कृतकमैक्षत तत्र ॥ ३६ ॥

वस्तुजातमविलोकितपूर्वं
निस्तुलप्रतिभ एष विलोक्य ।
ज्ञानमभ्यधिकमाप दुरापं
कूपदर्दुरनिभापरभूपैः ॥ ३७ ॥

रामसेतुमुपयातवतः प्राग्
रामराज इति विश्रुतनाम्नः ।
पुण्यकीर्तिपुरुषात् परमादौ
नीवृतो बहिरितोऽयमयासीत् ॥ ३८ ॥

प्रस्थितः पुरवरादथ तस्मा-
न्मद्रभर्त्रनुमतो मनुजेशः ।
गोटभूमिपतिना बहुधायं
मानितो निलयमाप तदीयम् ॥ ३९ ॥

तत्कृतामतिथिसत्कृतिमुच्चै-
रादरेण परिगृह्य विशाखः ।
आययौ जनपदं निजमभ्युत्-
कण्ठमानजनमात्मवियोगात् ॥ ४० ॥

१ पुण्डरीकाणां व्याघ्राणां पद्मानां च निकरैः. २ मृगविशेषाणां पद्मविशेषाणां च. ३ अण्डजाः पक्षिणो, मत्स्याश्च. ४ वनस्यारण्यस्य जलस्य च राशिम्. ५ गोश्री-(Cochin) पुरमहाराजेन.

कौतुकोत्तरळितैः पथि लोकैः
सेवितः सबहुमानमनेकैः ।
प्राविशन्निजपुरं सुमहूर्ते
श्रीविशाखयुवराजवतंसः ॥ ४१ ॥

पद्मनाभपदपद्मपरागैः
पावितामलमनोमुकुरोऽयम् ।
प्राप्तमभ्युदयमेवमनल्पं
तत्पदाम्बुजसमर्पितमाधात् ॥ ४२ ॥

अर्हणामनुपमामभिरूपै-
रर्पितोऽप्यवनिपो हरिभक्तः ।
नावलेपलवमप्ययमाप
श्रेयसि प्रतिनमन्ति हि सन्तः ॥ ४३ ॥

ज्येष्ठमेष कुलशेखरमात्म-
प्रेष्ठमेत्य विनयादवनम्रः ।
विस्तरात् कथितया निजयात्रा-
वार्त्तया मदयति स्म निकामम् ॥ ४४ ॥

सोदरोदितमुदन्तमशेषं
सादरं नरवरो निशमय्य ।
सोऽदरोदितमुदन्तरकार्षी-
न्मद्रदेशगमनाय मनीषाम् ॥ ४५ ॥

पार्वतीमवरजामथ लक्ष्म्याः
पाणिपीडनमहोचितकालाम् ।
आकलय्य कुलशेखर आसीत्
तत्पुराभिगमने सविळम्बः ॥ ४६ ॥

१ मद्रपुरयात्रायाम्.

भूभृतः स्वकुलधुर्यवितीर्ण-
प्राभृतप्रमुदितादथ तस्मात् ।
तां किलालभत केरलवर्मा
वल्लिकां शुकमृगालयजन्मा ॥ ४७ ॥

श्रीविशाखयुवराजगुणौघैः
कृष्यमाणमनसां सुजनानाम् ।
सौहृदं समुदयद्बहुशानं
शश्वदश्वयदिह प्रथिमानम् ॥ ४८ ॥

इत्थमभ्युदयिनि स्वकनिष्ठे
मत्सरी किल बभूव महाराट् ।
मानिनां परजनोन्नतिगन्धं
मानमानि नहि जातु सहन्ते ॥ ४९ ॥

सन्मतिस्स हि सदाशिवसंज्ञो
माधवस्य सचिवस्य मतीश्यः ।
प्रेरणाद्युवनृपस्य वारङ्ग-
प्राड्विवाकपदभाग्विदधेऽत्र ॥ ५० ॥

सत्यैकतानहृदयेन सदाशिवेन
संप्रेक्ष्य नीतिनियमेष परिष्कृतेषु ।
अन्वग्रहीषत विशाखनृपं विशोका
लोकाः स्वकीयकुशलाय कृतप्रयत्नम् ॥ ५१ ॥

धर्मैकायनमानसा जनहिता ये साधवो माधव-
प्रष्ठास्ते प्रणयं दधुर्युवनृपे श्रीपद्मनाभप्रिये ।
स्वस्वामिन्यपि भक्तिगौरवजुषामेषामदोषात्मनां
दोषाशङ्कितया कळङ्कितमभूत् कष्टं महाराण्मनः ॥ ५२ ॥

१ किळिमानूराख्यकुलोत्पन्नः. २ Sadasivan Pillai.

कुर्वन्नुर्वीभृदेष प्रतिदिवसमसभ्यानेनभ्याशमित्या-
नभ्याशे नाभ्यनन्दत् प्रणयिनमपि धर्मैकनिष्ठं कनिष्ठम् ।
सन्मार्गादप्रमाद्यंस्त्वफलपरतयैवाचरन्नात्मकृत्यं
नित्यं श्रीपद्मनाभं शरणमभजत श्रीविशाखावनीशः ॥ ९३ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
लालित्यातिशयेऽद्वितीयभणितेस्तस्य द्वितीयः कृतौ
सर्गोऽयं व्यगमद्विशाखविजये तन्मद्रयात्राभिधः ॥ ९४ ॥

इति श्रीविशाखविजये द्वितीयः सर्गः.

## तृतीयः सर्गः

श्रियमप्रतिमां दधत्यपि
स्वकुले सन्ततिसम्पदूनताम् ।
कलयन् कुलशेखरानुजः
शरणं श्रीरमणं प्रपन्नवान् ॥ १ ॥

अथ गर्भमधत्त पार्वती
वयसि प्रौढिमिते चतुर्दशे ।
सुषुवे च सुतं जगत्पतेः
कृपया केरळवर्मनामकम् ॥ २ ॥

अपरं पुरुहूतपालिता
दिगिवादित्यमसूत सा सुतम् ।
अपि राममपास्तदूषणं
दुहिता कोसलभूपतेरिव ॥ ३ ॥

१ दूरतः परिहर्तव्यान्. २ आदित्यवर्मनामकं सूर्यं च. ३ रामवर्मनामकं दाशरथिं च ४ निर्दोषं निरस्तराक्षसविशेषं च.

भगिनीतनयात्मजत्रयं
भगवद्दत्तमवेक्ष्य हृप्यतः ।
अजनिष्ट विशाखभूपते-
रथ नारायणनामकः सुतः ॥ ४ ॥

स्वकुलस्य युवावनीशिना
कुशले शश्वदजागरीद्यथा ।
कुलशेखरभूपतिस्तथा
स्वसुखेच्छुरभूत् पराङ्मुखः ॥ ५ ॥

न परं स्वकुलस्य भावुके
बहुधोदास्त स भोगितारजः ।
तदभव्यनिमित्तमप्यभूत्
क्वचिदुल्लङ्घ्य स्मृतिं सतां मताम् ॥ ६ ॥

अजहादत एव पार्वती-
दुहिता देहमनादितौदना ।
युवभूपतिपुण्यकर्मणां
परिणामः कुलतन्तुरेकिका ॥ ७ ॥

उदयाचलभूरिवोच्चकै-
रथ मार्त्तण्डमसोष्ट पार्वती ।
अभवद्यमवेक्षितुं क्षमो
न विशाखावनिचन्द्रमाश्चिरम् ॥ ८ ॥

चकिता कुलशेखरप्रभो-
र्युवभूद्भिदे गुणाढ्यये ।
न निवेदयति स्म पार्वती
सहजा वा तनयस्य जन्म तत् ॥ ९ ॥

१ सर्पदेवताके आश्लेषाख्ये नक्षत्रे जातः. २ अनिर्वर्त्तितान्नप्राशना. आदितमोदनं यया (प्रयोज्यकर्त्र्या) सा न भवतीति तथा. 'आदिखाद्योर्न' ति च तस्या न कर्मता. ३ मार्त्तण्ड-वर्माख्यं कुमारं सूर्यं च.

कुलशेखरभूपतिः क्रमा-
दनुजन्मन्यनुवृत्तिमत्यपि ।
अनिमित्तसमुद्गमर्षितो
दशशीर्षः स विभीषणे यथा ॥ १० ॥

हृदयेन विशाखगाडभू-
ननुजग्राह निजान्वयाङ्कुरान् ।
दुहितृत्रितयं क्रमादथ
स्वकळत्रे जनयांबभूव च ॥ ११ ॥

भगिनीतनयेषु मातुली-
तनयेष्वप्यविवेकवत्सला ।
विदुषी विधिवैभवं जहा-
वपि लक्ष्मीरनपत्यताशुचम् ॥ १२ ॥

अथ माधवमात्मनीकृतः
प्रथमाने कुशले प्रजाङ्गनम् ।
कथमप्यहितारजः प्रभुः
प्रथमामात्यमपातयत् पदात् ॥ १३ ॥

प्रकृतीः परिपाल्य कौशला-
दकृशीकृत्य च कोशमात्मनः ।
बहुमाननिमित्ततां गतं
सचिवं हन्त जहौ महीपतिः ॥ १४ ॥

विदुषावथ माधवास्पदे
नृपतिस्तस्य सतीर्थ्यमग्रमा ।
महिमातिशयेन लक्षितं
धियि मूर्तावपि शेषशास्त्रिणम् ॥ १५ ॥

१ विशाखे. २ Honorable A. Seshayya Sastriar C. S. I.

गुह्यकमभ्रो महाप्रभुः
प्रविलोभ्य प्रणयाभिनीतिभिः ।
अनतीं पदवीमवीविश-
न्निजनाथप्रियखञ्जनाश्रमम् ॥ १६ ॥

कुरुशेखररामवर्णनः
कुतुकाय क्षितिवासवस्य ते ।
तरुणा गुरुणा नवासवे
बहुमानेन बभूवुरुत्सुकाः ॥ १७ ॥

प्रतिवारमसूत् प्रत्वरो
मधुवारः पुरतो महाप्रभोः ।
मिथुनानि निजान्यदीययो-
र्व्यतिरेकं स्म विदन्ति यत्र नो ॥ १८ ॥

अपि कान्तमवेक्ष्य मानिनी
मदिराक्षीवतमा न मानसे ।
अपराधरविम्बचुम्बिनं
मदिराक्षी बत माननीनशे ॥ १९ ॥

अपिबत् किल न स्वयं सुरा-
मपरान् पाययति स्म केवलम् ।
परनारकमार्गदर्शन-
प्रमदाविक्रयवशाद्विशां पतिः ॥ २० ॥

धरणीशमुपेत्य चम्पकं
स्फुरदामोदभरं प्रलोभिताः ।
तरुणा मधुपा मलीमसा-
स्तरसा केऽपि गताः परामुताम् ॥ २१ ॥

१ नूतनमद्ये. अथ न वासवे इति च्छेदः. इन्द्रेऽप्युत्सुका न बभूवुरित्यर्थः. २ मदिरया मद्येन क्षीवतमातिशयेन मत्ता. ३ ईर्ष्याकोपम्. ४ प्राप.

बहुना किमु पार्वतीपतिः
स चतुर्विंशतिहायनो युवा ।
असिनेन सुरादरेण तत्-
सुहृदोऽन्येऽपि सुरालयं गताः ॥ २२ ॥

निशमय्य विशाखभूपति-
र्दशमीं केरळवर्मणो दशाम् ।
भृशमार्तिमवाप तद्दिने
शिशुमन्त्यं च तदीयमैक्षत ॥ २३ ॥

परिदेव्य चिराय पार्वती
निजवैश्वस्ततया विहस्तिता ।
अवृणोदथ राजराज इ-
त्यपरं वल्लभमात्मदेवरम् ॥ २४ ॥

दयितेन वियुज्य पार्वती
न यदा तत्कदनादमुच्यत ।
अनयन्नियतिस्तदात्मनः
प्रियमादित्यमपत्यमत्ययम् ॥ २५ ॥

अथ तेन कुमारमृत्युना
जनितामार्तिमगूहदाशये ।
युवभूपतिरर्णवो यथा
जठरे वाडववर्हिषः शिखाम् ॥ २६ ॥

स महानहितारभूमिभृ-
न्निजवंशाङ्कुरनाशमीदृशम् ।
न मनागपि शोचति स्म हा
दधदभ्रान्तमशोकशालिताम् ॥ २७ ॥

१ वाञ्चियुवराज्ञीपतिः. २ सुरायां सुरेषु च आदरेणास्थया अदरेण भयाभावेन च. ३ परलोकं मदिरागृहं च. ४ स्ववैधव्येन. ५ स्वभर्तृभ्रातरम् ६ वंशपदं कुले वेणौ च. ७ शोकशून्यत्वमशोकवृक्षवत्त्वं च.

स्वकुले भृशमाकुले तदा
सकले साधुकुले च शोचति ।
स भुजङ्गभजस्त्वचीकरत्
प्रभुरिष्टैः किल पानगोष्ठिकाम् ॥ २८ ॥

अचिरादथ शेषशास्त्र्यपि
क्षितिपद्वेषविषेण शिश्लिषे ।
न कमस्य दुरूहशेमुषी
द्विषमाशङ्कितवत्यकल्मषम् ॥ २९ ॥

कुहचिद्दिवसे वसुन्धरा-
शतमन्युर्धृतमन्युरुच्चकैः ।
इदमाह पुरा पुरः स्थितं
जनमापानगतं मदोद्धतम् ॥ ३० ॥

अयमद्य खलः पिचण्डिलः
सचिवो मां न तृणाय मन्यते ।
सततं प्रतिकूलमाचर-
न्नकृतज्ञो व्यथयत्यतीव माम् ॥ ३१ ॥

अयि मत्प्रियसेवकाः! कथं
भवतामत्र न जायते व्यथा ।
समदुःखसुखैर्हि सन्ततं
भवितव्यं नृपसेवयोत्सुकैः ॥ ३२ ॥

विदितं ननु माटभूपतेः
प्रियकारी शिवरामगायकः ।
तदमित्रममात्यशङ्करं
गरळं प्राशयितुं यदैहत ॥ ३३ ॥'

१ पानगोष्ठीगतम्. २ नृपसेवायाम्. 'प्रसितोत्सुकाभ्यां तृतीया च' इति तृतीया.

अपयामि यथेष्टमाज्ञये-
त्यमुना यद्यपि मे प्रतिश्रुतम् ।
न तथापि निवर्तते स्वयं
मम पीडां जनयन् पिशाचवत् ॥ २४ ॥

कुमतेरवलेपमस्य न
क्षमते हृन्मम माधवाधिकम् ।
उपमन्त्रिषु कश्चिदेव मे
भविताऽलं सचिवस्य कर्मणे ॥ २५ ॥

इति राजमुखात्[1] परिस्रुता
खलवागास्वदिता परिस्रुता ।
विषवर्षनिभा विशङ्कटे
निदधौ कञ्चन धर्मसङ्कटे ॥ २६ ॥

प्रणिधाय स कोऽपि पत्रिकाम्
सचिवः[2] द्रुह्यति ते महीपतिः ।
सपदि स्वपदादपेहि वा
सुपरीक्ष्य स्वगुणान्[3] गृहाण वा ॥ २७ ॥

उपमन्त्रिणमात्मनः प्रियं
तव नारायणसंज्ञमास्पदे ।
कथमप्यचिरान्निवेशयेत्
स महाराडिति शेषशास्त्रिणे ॥ २८ ॥ युग्मकम् ॥

स च तां समवेक्ष्य पत्रिकां
सचिवः संभृतसंभ्रमो भृशम् ।
प्रथमं युवभूभुजेऽहिनो-
दथ तस्मै महते महीभृते ॥ २९ ॥

---

१ गलिता. २ सचिवेन. सहार्थे तृतीया. ३ गुणान्.

बलवत्तरयाथ वात्यया
विधुतं पत्रिकयाधिकं तया ।
कुलशेखरभूभृतो मनो-
गहनं कोपदवस्तदानशे ॥ ४० ॥

लिखितां किल केरळेन ता-
मथ लक्ष्मीपतिना निशम्य सः ।
चिरकाङ्क्षिततत्प्रवासना-
वसरं स्वागतमन्वमोदत ॥ ४१ ॥

करुणामसृणो विशाखराड्
विनिपातं सुहृदो वितर्कयन् ।
प्रणतः कुलशेखराग्रतः
सविमर्शं तमिति व्यजिज्ञपत् ॥ ४२ ॥

भ्रममूलकमस्य चापलं
किमपीदं क्षमतां सकृद्भवान् ।
महतां हि विभूषणं क्षमा
भवतस्सा च भृशं वशंवदा ॥ ४३ ॥

विषयः किमयं भवद्रुषो
भवदिच्छावशवर्तिभावुकः ।
बहुमन्तुमिमं त्वमीशिषे
ननु बन्धुं च वसुन्धरापते ! ॥ ४४ ॥

परतन्त्रतया नियन्त्र्यता-
मयमत्रैव कळत्रसन्निधौ ।
दृढमेनमनुव्रतां सतीं
स्वसृपुत्रीं स्मर नस्तपस्विनीम् ॥ ४५ ॥

१ बह्वपराधम् अथच सम्मानयितुम्. २ नद्धुम् अथच सनाभिम्. बहुमन्तुमिमं बन्धुमीशिषे इत्येका योजना. बन्धुमिमं बहुमन्तुमित्यपरा. इमं बहुमन्तुं बन्धुं चेत्यन्या.

वितनोमि तथास्य बोधनां
न यथायं पुनरेवमाचरेत् ।
गदितं यदिदं मया तद-
प्युदितप्रेम तितिक्षतां भवान् ॥ ४६ ॥

युवराजमथाब्रवीत् प्रभुः
प्रहिता मद्रपुराय पत्रिका ।
परमत्र तदीश्वरेरितं
करवाणीति करालनिश्चयः ॥ ४७ ॥

अथ यावतिथेन मद्रभृत्-
प्रतिपत्रस्य भवेत् समागमः ।
अतिकातरतामगाहत
क्षितिपस्तावतिथे गतेऽहनि ॥ ४८ ॥

निजमण्डलवासिनं किल
क्षितिभृन्मद्रवरस्य मन्त्रिणम् ।
अनयद्वशमात्मनो नयैः
फलितैरात्मममानधर्मसु ॥ ४९ ॥

कुटिलेषु नयेषु कोविदः
कुमहेन्द्रः कुलशेखरस्ततः ।
प्रणिधीन् प्रजिघाय केरळे
तमभिद्रोढुमुदित्वरत्वरः ॥ ५० ॥

मनुजपरिवृढेन द्रोहलक्षीकृते द्रा-
गभवदखिललोकः केरळे सावहेळः ।
विहितमपि सुहृद्भिः क्षेममार्गोपदेशं
विधिविधुरितबुद्धिः श्रद्दधे नायमद्धा ॥ ५१ ॥

१ यावतां पूरणेन. २ °वतां पूरणे.

कार्तान्तिकैः कथितमेव पुरा यदस्य
केतोर्दशा किमपि कष्टफलप्रदेति ।
आंता भृशं तदनुचिन्त्य दृढानुरागा
राज्ञी प्रियस्य कुशलाय तपोऽन्वतिष्ठत् ॥ ९२ ॥

आशंसेऽहं तव कुशलमेवानिशं मा कृपीष्टा-
श्चापल्यानि क्षितिवल्लभिदः कोपसन्दीपनानि ।
मध्यां वृत्तिं महदभिमतां मानयेत्येकमित्रं
पत्रेणास्मै हितमुपदिदेशाञ्जसा श्रीविशाखः ॥ ९३ ॥

मा भूत् किञ्चिदभद्रमित्यजनि मे कर्मेदमेतादृशं
मन्दप्रज्ञतया नृपस्तु कुपितः प्रागेव मे द्रुह्यति ।
दण्डं चण्डमसौ विधास्यति तदा लक्ष्मीयुतः क्ष्मापति-
र्द्रौ रक्षिप्यत इत्यसावभजत श्रीनाथमस्तव्यथः ॥ ९४ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
नेतुर्वञ्चिपतेः कुटुम्बचरितं सङ्क्षेपतः प्रस्तुवन्
सर्गस्तस्य कृतौ विशाखविजये काव्ये तृतीयो गतः ॥ ९५ ॥

इति श्रीविशाखविजये तृतीयः सर्गः.



चतुर्थः सर्गः

श्रीमान् विशाखनृपतिः सीमातिगतसद्गुणः ।
श्रीमाधवं सुहृद्वृन्दक्षेमार्थं प्रार्थयत्तदा ॥ १ ॥

उदासीनवदासीनं महाराजो निजानुजम् ।
साहाय्यदायिनं मेने मोहात् केरळवर्मणे ॥ २ ॥

अगाधधीरथाहूय श्रीरामस्वामिशास्त्रिणम् ।
अहिनक्षत्रजः क्ष्माभृदहिनोत् केरळान्तिकम् ॥ ३ ॥
ब्रह्मविद्योपदेष्टारं स्वस्य साहित्यदेशिकम् ।
केरळः प्रतिजग्राह बहुमानपुरस्सरम् ॥ ४ ॥
अथानुयुज्य कुशलं कुशलः शास्त्रिपुङ्गवः ।
तेन सल्लापमकरोदित्थमर्धसमस्यया[1] ॥ ५ ॥
भवने कुप्यति कुतः कुलशेखरभूपतिः ।
यावदत्र भवान् वेद तावदेव ह्यवैम्यहम् ॥ ६ ॥
प्रधानाय भवान् काञ्चित् प्रैषयत् किल पत्रिकाम् ।
नो परिज्ञायते तत्र भूपतेः कोपकारणम् ॥ ७ ॥
मन्त्रिणं हन्तुमुद्युङ्क्ते महाराडित्यलेखि किम् ।
नो जाने कञ्चिदुद्योगं भूजानेरद्य तादृशम् ॥ ८ ॥
सर्वथा भवदुद्देश्यस्संशयोऽस्यापनीयताम् ।
अपदे[2] नृपतेश्शङ्कामपनेष्यामि हा कथम् ॥ ९ ॥
कथमप्यवनीनाथः प्रथमं परितोष्यताम् ।
कथयन्तु भवन्तो मां कथमेष प्रसाद्यते ॥ १० ॥
शरणीकरणीयोऽसौ धरणीरमणोऽद्य वः ।
करुणारहितस्सोऽयं शरणीक्रियते कथम् ॥ ११ ॥
जननाथस्यानुवृत्त्या जननीया दया हृदि ।
अनुवृत्तिरशक्यैव मनुजेशेऽद्य वैरिणि ॥ १२ ॥
बिभेमि बलवद्वैरं दुरुदर्कं[3] भवेदिति ।
न भेतव्यं बलवतोऽप्यनिमित्ताद्विरोधतः ॥ १३ ॥
विरोधस्यानिमित्तत्वं भूयः खलु भयावहम् ।

१ अर्धस्य स्वोक्तस्य पूर्वार्धस्य समस्यया केरलवर्मकृतोत्तरार्धपूरणेन. २ अस्थाने
३ दुष्टोत्तरफलम्.

भयहेतोरवार्यत्वे भीत्वा वा किं प्रयोजनम् ॥ १४ ॥

भीतिं निशम्य भवतः प्रीतिं भजतु भूपतिः ।
भूपतेः प्रीतये तर्हि भूयसी भीतिरस्तु मे ॥ १५ ॥

क्षमापतेः पदे नत्वा क्षमापयतु तं भवान् ।
न मां दिदृक्षते स्वामी नमाम्यस्य पदे कथम् ॥ १६ ॥

प्रेष्यतां पत्रिका तर्हि प्रश्रयाद्दर्शनार्थिनी ।
भवत्वेवं भवन्तो मामनुगृह्णन्तु सन्ततम् ॥ १७ ॥

मोचयेत् सङ्कटाद्युष्मान्छङ्करी भक्तकिङ्करी ।
शेश्वीयिताश्वासदायी शश्वद्विश्वास एष मे ॥ १८ ॥

अथ शास्त्रिणि निर्याते विमना अपि केरळः ।
गुरुवाक्यं लङ्घि मेति पत्रिकां प्रभवेऽहिनोत् ॥ १९ ॥

प्रमत्तधीर्न तत्रापि पत्रे दुर्दैवचोदितः ।
उचितं केरळश्चक्रे प्रश्रयस्य प्रकाशनम् ॥ २० ॥

राज्ञो रोषरसेनाथ यशः केरळवर्मणः ।
सुवर्णमपि तत्काले दुर्वर्णत्वमनीयत ॥ २१ ॥

तमसा केरळीयेन तदा राजनि बाधिते ।
विशाखनृवरोऽमाङ्क्षीद्विशाले शोकसागरे ॥ २२ ॥

केरळं रमणं राज्ञी चापलाद्भूपकोपनात् ।
द्यूतादिव नळं भैमी निवर्तयितुमैहत ॥ २३ ॥

बलिना कलिना नीतो मलिनाशयतामयम् ।
नाददे प्रियया राज्या बहुधाभिहितं हितम् ॥ २४ ॥

१ भृशप्रवृद्धाश्वासदायी. २ माङ्योगे कर्मणि लुङ्. ३ रसशब्दश्चित्तवृत्तौ पारदे च. ४ शोभनवर्णे स्वर्णे च. ५ दुष्टवर्णत्वं रजतप्रायत्वं च. ६ तमोगुणेन (तत्कार्येण वा) अथ च राहुणा. ७ भूपे चन्द्रे च. ८ शोक एव समुद्रे.

भूयोऽपि लक्ष्मीरमणो भूपतेर्हृदयार्णवम् ।
व्यळीकमन्दरेणोच्चैर्व्यलोडयदकुण्ठितः ॥ २५ ॥
मनुजर्षभसंघर्षसंरम्भोऽस्य महाजनैः ।
नाभ्यनन्दि नराधीशो महती खलु देवता ॥ २६ ॥
अथ मद्रपतेर्लेभे लेखं स कुलशेखरः ।
पत्रं केरळवर्मा तदमात्यायाहिनोदिति ॥ २७ ॥
ततो निष्कास्य नगराद्राजद्रोहापराधिनम् ।
कारायां केरळं राजा निवेशयितुमादिशत् ॥ २८ ॥
असह्ययोल्कयेवाथ वार्त्तयार्त्ततरा तया ।
राज्ञी दावावरुद्धेव सिंही वेल्लल्यमानशे ॥ २९ ॥
चपलक्रियया कीशकीलोत्पाटनकल्पया ।
स्वयमुत्पादितानर्थं राज्ञीत्याह स्म वल्लभम् ॥ ३० ॥
स्मरसि त्वमनादृत्य मदुक्तीर्मदमेदुरः ।
आचरिष्यसि चापल्यममक्तान्निष्प्रयोजनम् ॥ ३१ ॥
सत्यं नाम सतां वर्त्म महाराजो जहात्ययम् ।
तथापि शङ्किताः सर्वे नन्वेनमनुरुन्धते ॥ ३२ ॥
क्लेशितस्यापि बहुशो महाराजेन निष्कृपम् ।
क्षमामस्पन्दमक्षामां पश्य यूनः क्षमापतेः ॥ ३३ ॥
अजिघांसदमात्यं चेदवनीजानिरात्मनः ।
कस्तवैकस्य भारोऽभूत् तदभव्यनिवारणे ॥ ३४ ॥
अनावश्यकमेवासीत् तावद्भावत्कचेष्टितम् ।
किं तया चिन्तयेदानीमत्याहित उपस्थिते ॥ ३५ ॥
रन्ध्रप्रतीक्षी नौ द्रोग्धुं लब्ध्वावसरमीदृशम् ।

१ लक्ष्मीनामकवाञ्चिमहाराज्ञीपतिः विष्णुश्च. २ रूपकसमासः. ३. अभिज्ञावचने. ४ हन्तुमैच्छत्.

कथङ्कारमुपेक्षेत क्षितीशो वैशसप्रियः ॥ ३६ ॥
किमिदानीं विधातव्यं पश्यैतानुद्भटान् भटान् ।
महाराजनियोगेन प्रसह्य त्वां निनीषतः ॥ ३७ ॥
एते भयङ्करा योधाः कौतान्ता इव किङ्कराः ।
द्वारमावृत्य तिष्ठन्ति प्रेरिताः पृथिवीभृता ॥ ३८ ॥
अथ त्रिविक्रमो नाम पुराध्यक्षो जघन्यजः ।
अभ्येत्य राज्ञीमाह स्म दर्शयन् मन्त्रिपत्रिकाम् ॥ ३९ ॥
अमुं केरळवर्माणं नृपद्रोहेण मागमम् ।
अमात्येन नियुक्तोऽहमितो नेतुं पुरान्तरम् ॥ ४० ॥
उद्धतामिति तद्वाचमाकर्ण्यावाचदुच्चकैः ।
इन्द्रगोपा महाराज्ञी पन्नगीव पदाहता ॥ ४१ ॥
शूद्राधम! कथन्नाम नाम प्राणेश्वरस्य मे ।
रमज्ञया कद्धत्या गृह्णासि त्वमसंशयम् ॥ ४२ ॥
अपेह्यपेहि दुर्बुद्धे! सहसा मम सन्निधेः ।
यदि नेच्छसि मद्दासीहस्तसम्मार्जनीहतिम् ॥ ४३ ॥
रोषभीषणमाकर्ण्य राज्ञ्या भाषणमीदृशम् ।
अवाचि निर्गते तस्मिन्नवाचि दयितेन सा ॥ ४४ ॥
सम्प्रत्यसाम्प्रतमिदं तव संरम्भजृम्भितम् ।
राजाज्ञया मन्त्रिपत्रे प्रवृत्तेऽस्मिन्नभेद्यया ॥ ४५ ॥
राज्ञ आज्ञाकरेष्वेषु राज्ञि! रोषो न शोभते ।
शक्यं चेदनुनेतव्यो भूप एव त्वयाधुना ॥ ४६ ॥
इत्थं भर्तृगिरा राज्ञी पत्रं धात्रीभृतेऽहिनोत् ।

१ अन्यथैवमित्यादिना णमुल्. २ वैशसं हिंसा. ३ कृतान्तस्येमे. ४ शूद्रः. ५ न वाच्यस्य तस्मिन्. ६ ब्रूञः कर्मणि लुङ्.

क्षान्त्वा मन्तून् सकृद् भ्रान्तः कान्तो मे त्रायतामिति ॥ ४७ ॥
मद्रभर्तृनियोगेन प्रक्रान्तेऽस्य नियन्त्रणे ।
न मया शक्यते किञ्चिदिति राजाकृतोत्तरम् ॥ ४८ ॥
परन्तपेन लिखितामरुन्तुदगिरं तु ताम्[1]
वाचयन्ती किलानच्छे मूर्च्छां मन्योर्महीश्वरी ॥ ४९ ॥
अवलम्ब्य पुनर्धैर्यमवनीपतये पराम् ।
अहैषीत् पत्रिकां राज्ञी सतीव्रतसतीव्रता[2] ॥ ५० ॥
अवश्यं यदि नेतव्यः कान्तो मे नगरान्तरम् ।
अनुजानीहि तद्गन्तुममा[3] तेनाद्य मामपि ॥ ५१ ॥
इत्थं पृथ्वीश्वरीलेखमालोक्याखण्डलो भुवः ।
नानुजानामि गन्तुं त्वामित्युत्तरमकल्पयत् ॥ ५२ ॥
यदि मत्स्वैरसञ्चारं महाराजो निषेधति ।
नानुजानामि गन्तुं मे तर्हि कान्तं गृहान्तरात् ॥ ५३ ॥
इति व्यवसिता लक्ष्मीरतिव्यथितमानसा ।
भेजे गृहान्तरं प्राणप्रेयसा केरळेन सा ॥ ५४ ॥
अथोपमन्त्रिणं प्रेष्ठं नागनारायणं नृपः ।
सद्यः केरळवर्माणमुद्वासयितुमादिशत् ॥ ५५ ॥
तेन विज्ञापिता राज्ञी विज्ञेन मृदुभाषिणा ।
राजाज्ञागौरवाद्भर्तुरन्वज्ञासीत् प्रवासनम् ॥ ५६ ॥
नीयते यदि मद्भर्ता सापराधो नृपाज्ञया ।
कथं निषेधति नृपः सहयानं ममैच्छिकम् ॥ ५७ ॥
इत्याख्याय महाराज्ञी पत्या सह विनिर्गता ।
गच्छता दण्डकारण्यं काकुत्स्थेनेव जानकी ॥ ५८ ॥

१ अरुन्तुदां मर्मस्पृशं गिरम्. २ सतीव्रतं तीव्रतया सहितं सतीव्रतं साध्वीव्रतं यस्यास्सा. ३ सह.

कलिप्रख्यैः प्रभुप्रेष्यैः कथमप्यथ केरळः ।
वियोजितो हठाल्लक्ष्म्या भैम्या नळ इवाधराः ॥ ५९ ॥
रथेन नीयमानं तं सत्वरं राजपूरुषैः ।
क्रन्दन्ती सा मुक्तकण्ठमन्वधावत् पतिव्रता ॥ ६० ॥
नीलनागनिभो राज्या विमुक्तश्चिकुरोत्करः ।
विरदे नृपतेः कौतुहदि तन्नर्कितो जनैः ॥ ६१ ॥
विशिखायां विशां नाथामनाथां पादचारिणीम् ।
विलोक्य शोकविवश उपाक्रोशन्नृपं जनः ॥ ६२ ॥
रुदती कुररीवार्त्ता सुदती कुलबालिका ।
विद्रावयन्त्यनीनानां हृदयं सदयोदयम् ॥ ६३ ॥
रथ्यागता रथस्थेन राज्ञी केरळवर्मणा ।
नाथिताभूदनाथेन नाथे! त्रायस्व मामिति ॥ ६४ ॥
अथ न्यरोधि निश्शङ्कं योधैरायुधपाणिभिः ।
तरळाक्षी कुरङ्गीव व्याधैराबद्धवागुरैः ॥ ६५ ॥
राज्यास्तादृगवस्थाया रूपमापादमस्तकम् ।
धारयन् मनसा दूनः केरळो दूरतोऽभवत् ॥ ६६ ॥
निन्दन्ती निजदौर्भाग्यं क्रन्दन्ती सुन्दरी शुचा ।
प्रत्यागच्छदथो कृच्छ्राच्छून्यमावसथं निजम् ॥ ६७ ॥
परस्परानुरक्तौ तौ दम्पती विरहार्दितौ ।
प्राणैरन्योन्यमाश्लिष्य दैवयोगादजीवताम् ॥ ६८ ॥
राजकारालयं नीतः केरळो राजपूरुषैः ।
अज्ञातसीमं स्वातन्त्र्यविच्छेदक्लेशमन्वभूत् ॥ ६९ ॥
महाराजाज्ञया राज्ञी गृहान्निर्गन्तुनक्षमा ।

१ धूमकेतुः. २ अनिन्दत.. उपाद्रावुपसर्गौ.

परतन्त्रतया भर्तृनिर्विशेषमखिद्यत ॥ ७० ॥

मार्तण्डघटितं द्वन्द्वं लक्ष्मीकेरळयोस्तदा ।
राज्ञो दोषावतारेण बिभिदे कोकयोरिव ॥ ७१ ॥

इति चिरधृतमात्मनोऽभिलाषं
क्षितिरमणः स जवेन साधयित्वा ।
पतिमभिलषितं वरीतुमन्यं
प्रतिनवशोकवशात्मशात् कृशाङ्गीम् ॥ ७२ ॥

तत्तादृशेन कुलशेखरशासनेन
मर्मस्पृशा सविषकर्णिशरोपमेन ।
भिन्नाशयापि कथमप्यवलम्ब्य धैर्य-
माह स्म नाहमधुना विधवेति राज्ञी ॥ ७३ ॥

अनाथां स्वस्रीयामनुपमतमक्लेशविवशां
विशाखक्षोणीशो भृशमनुशुशोचाकृशकृपः ।
ततश्चैनामाश्वासयितुमयतिष्टैष बहुधा
विधाय श्रीकान्तं श्रितशिवदमेकान्तशरणम् ॥ ७४ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
तेनायं कृतिनां कृतोरुकुतुके काव्ये कृते नायक-
स्वस्रीयाविरहार्त्तिकीर्तनपरः सर्गस्तुरीयो गतः ॥ ७५ ॥

इति श्रीविशाखविजये चतुर्थः सर्गः.

१ मार्तण्डवर्मराजेन सूर्येण च योजितम्. २ नृपस्य चन्द्रस्य च. ३ दोषाणाम-वतारेण अथ च दोषा (अव्ययं) रात्रावयतारेण. ४ शिष्टवान्.

श्रीपद्मनाभमभजद्युवभूवलारि-
रापद्गतस्वभगिनीतनयावनैषी ।
पापंप्रसक्तजनपैशुनदूषितस्य
भूपस्य निष्करुणतया विमनायमानः ॥ १ ॥

संप्रार्थयद्युवनृपो न नृपं महान्तं
सन्तापशान्तिविधये प्रियभागिनेय्याः ।
अभ्यर्थनाविफलतावगमे न जातु
प्रेक्षावतां भवति याचनसाहसिक्यम् ॥ २ ॥

सोढा कियच्चिरमियं सुमसायकार्त्तिं
मूढा भजेत् कमपि कामुकमन्यमेव ।
एवं विचिन्त्य स दिनानि भुजङ्गतार-
जन्मा निनाय कुलशेखररामवर्मा ॥ ३ ॥

नाहं कदापि पुरुषान्तरमाश्रयिष्ये
मोहं विहाय नृपतिर्महतां मतेन ।
बन्धाद्विमोच्य दयितं दयया मया तं
सन्धास्यतीति सहिताशम्[1] उवास राज्ञी ॥ ४ ॥

गृह्णाति यावदितरं कमितारमेषा
योषास्वभावसुलभेन कुतूहलेन ।
मुञ्चामि तावदगतिं पतिमेतदीयं
बन्धादिति क्षितिपतिर्मतिमाबबन्ध ॥ ५ ॥

एवञ्च पञ्चदशमासमिते गते स
कालेऽभवद्वसुमतीपतिरामयावी[2] ।
काठिन्यमन्यजनदैन्यमजानतोऽस्य
किञ्चिद्रुजैव निजया श्लथतामनायि ॥ ६ ॥

१ हिताशासहितं यथा भवति तथा. २ रोगी.

बन्धं विहाय निजबन्धुनिकेतनैक-
वासाय केरळमथ प्रभुरन्धजानात् ।
तात्कालिके किमपि शान्तिमिते गदे तु
तद्बन्धमुक्तिमनुचिन्त्य भृशं शुशोच ॥ ७ ॥

भूलोकभर्तुरनियन्त्रितकामवृत्तेः
स्थैर्यं शरीरगतमस्तमितं क्रमेण ।
दौर्जन्यजातकुतुकस्य यथा तथास्य
काठिन्यमान्तरमशान्ततरं बभूव ॥ ८ ॥

बन्धूनमंस्त विमतान् विमतांश्च बन्धू-
नन्धंभविष्णुरपदेष्वपि दुर्वितर्कैः ।
नागर्क्षजस्य जगतीपतिराश्रितेषु
विश्वेष्वविश्वसितधीरभवत् क्रमेण ॥ ९ ॥

शेषं मनीषिणमनीषदशेषनीवृ-
त्तोषप्रपोषणचणप्रतिभाविशेषम् ।
देशीयनीतिषु तदैव कृतावगाहं
हाहन्त नासहत साहसिको महीन्द्रः ॥ १० ॥

नैसर्गिकादहिभयाच्चिरकासयद्यः
कारुं कदाचिदुपदीकृतकृत्रिमाहिम् ।
तस्याप्रियोऽजनि महीवलशासनस्य
शेषो भयावहतयेति किमत्र चित्रम् ॥ ११ ॥

आदेशतां दधदमात्य माधवस्य
स्थानीव मन्त्रिपदलोपमवाप शेषः ।

१ किञ्चित्. २ रोगे. ३ अनेगहटत्वम्. ४ अनन्धः अन्धो भवतीति तथा. 'कर्तरि भुवः खिष्णुच्खुकञौ' ५ सर्पभयात्. ६ तन्नामको मन्त्री सर्पराजश्च. ७ स्थानापन्नत्वम्. ८ मन्त्रिभूतपूर्वस्य. ९ माधव इव 'स्थानिवदादेश' इत्यतिदेशादिति तात्पर्यम्.

[1]तत्र प्रवृत्तिमचिरादलमाश्रिताय
　　नारायणाय ददिवान् नृप इत्यतन्त्रम् ॥ १२ ॥

शेषाय पूर्वमलिखत् किल केरळो यत्
　　सख्यापयन् वसुमतीवलशासनस्तत् ।
निर्वाल्य शेषमधिकारममुष्य नाग-
　　नारायणाय नचिरादुपमन्त्रिणेऽदात् ॥ १३ ॥

द्वेषः क्रमेण धरणीरमणस्य वर्णे[2]
　　प्राथम्यभाजि कमपि प्रथिमानमाप ।
यत् सोऽकरोद्वृषलमेकममात्यवर्यं
　　धुर्यं तथान्यमनराळ्यमण्डलेऽपि ॥ १४ ॥

नित्यं निजेष्टघटनैकपरायणेन
　　नारायणेन सचिवेन नराधिनाथः ।
आराधितोऽभवदनेकविधैरुपायै-
　　रिन्धानमध्यमपुमर्थयुगाभिलाषः ॥ १५ ॥

स्वश्रीनिरासिनि धरालुमसायकस्य
　　देहे समत्सरतया किमु हेमकामौ ।
लब्ध्वावकाशमिदमीयबलव्यपाया-
　　द्राजानमातुरममूमुहतां[3] नितान्तम् ॥ १६ ॥

विज्ञानसागरतलं स्पृशतापि राज्ञा
　　नाज्ञायतावमनयेन धनार्जनस्य ।

---

१ तत्रेत्यादेरयमर्थः — नृपस्तत्र मन्त्रिपदे प्रवृत्तिमलमत्यर्थमाश्रिताय स्वसेवकाय नारायणाय तन्नामकाय शूद्राय ददिवान् ददावित्येतदतन्त्रमयुक्तं शेषवद् सामर्थ्याभावादिति भावः. अथच तत्र 'स्थानिवदादेश' इति शास्त्रे प्रवृत्तिं शास्त्रप्रवृत्तिं कर्तुश्चाधिकरणत्वविवक्षा. अलं वर्णमाश्रिताय द्यौः पन्था इत्यादौ वकारनकारादिरूपालमाश्रितं हल्ङ्याबिति लोपविधिं सम्पादयितुमित्यर्थः. 'क्रियार्थोपपदस्य' इति चतुर्थी. ददिवान् कृतवानित्येतदतन्त्रं शास्त्रविरुद्धम् 'अनल्विधौ' इति निषेधात्. २ ब्राह्मणवर्णे. ३ मोहयतः स्म.

वेदान्ततत्त्वमखिलं विदुषाप्यशाकि
नादान्तकाममुना हृदयं नियन्तुम् ॥ १७ ॥

द्वेधा भ्रमं व्यधित यासु च येषु वेधाः
कान्तासु तासु कनकेषु च तेषु सक्तः ।
धत्तेतरां स्म धरणीरमणः क्रमेण
निस्स्नेहतां बत निजेष्वपि बान्धवेषु ॥ १८ ॥

कौमारकेऽपि किमपि प्रबलामयार्त्ते[1]
मार्तण्डवर्मणि निजादिमभागिनेये ।
पथ्योपदेशमविधाय न किं नृपस्त-
दप्राप्तकालविलयस्य निमित्तमासीत् ॥ १९ ॥

अत्रान्तरे युवमहीमिहिकामयूख-
स्तत्तादृशक्रिमिकोटिमटीकतार्त्तः ।
यावत्समे[2]ऽपि समशेरत मातुलो वा
पूर्वं प्रयाति[3] भागिनीतनयोऽथवेति ॥ २० ॥

राजन्यमौलिमणिरेष विशाखराज-
स्सौजन्यवारिधिरनल्पगदार्दितात्मा ।
कस्याशयं न सुजनस्य चकार चिन्ता-
सन्तापसिन्धुकुहरादिमकूर्मकामम् ॥ २१ ॥

रोगस्वभावमवगम्य धृतावधानो
दूरादपथ्यमखिलं परिहृत्य धीरः ।
युक्त्या निषेव्य च भिषक्कथितौषधानि
कल्पो बभूव युवभूवलभिद्गभीरः ॥ २२ ॥

आजन्मतः परिचितं पटुधीर्विशाखः
शाल्योदनं यदयमोज्झदनात्मनीनम् ।

१ मार्तण्डवर्मरोगानुभवदशायाम्. २ सर्वे. ३ प्रयास्यति 'यावत्पुरानिपातयोर्लट्'

गोधूममत्ति परमद्य च यत्तदेत-
व्यक्तं हृषीकजयशक्तिमनुष्य वक्ति ॥ २३ ॥

उच्चैरुपेन्द्रनिरुपाधिकृपाकटाक्षै-
रुच्चाटितप्रतिभयामयमुज्ज्वलाङ्गम् ।
मुक्तं विधुन्तुदमुखादिव पूर्णचन्द्र-
मानन्दनिर्भरमलोकत लोक एनम् ॥ २४ ॥

नागर्क्षजन्मनृपतेरवशेन्द्रियस्य
रोगेण मृत्युसचिवेन वशीकृतस्य ।
हा स्वानुजन्मनि विनष्टगदे सदेह-
सौख्ये सति प्रतिनवो ववृधे किलाधिः ॥ २५ ॥

नित्यानुवर्तनरते नितरां विनीते
निर्मत्सरे निजकनीयसि रामराजे ।
निष्कारणं निहितवानहितारजन्मा
विद्वेषमेष हतदैवपरीतचेताः ॥ २६ ॥

स्वाभाविकस्य परपीडनकौतुकस्य
तत्तादृशं विषयमिद्धमुदाधिगम्य ।
कष्टं न किं किमनुभावित एष हन्त
शिष्टाग्रणीरवरजः कुलशेखरेण ॥ २७ ॥

स्वानन्तरं विषयनायकभूयमस्य
न स्याद्यथेति पिशुनैस्सह मन्त्रयित्वा ।
मिथ्याभिशंसनमहो स्वसहोदरस्य
तेन व्यधायि बहुधा वसुधाधिपेन ॥ २८ ॥

ज्येष्ठस्य नीवृदधिपत्य तथा गरिष्ठं
स्वान्निमित्तनिरपेक्षमवेक्ष्य वैरम् ।

---

१ विषयनायकत्वम् 'भुवो भावे' इति क्यप्. २ मृषापवादम्.

खिन्दानधीरपि विशाखनृपस्तपस्वी
न स्वीयधर्ममजहान्नृपतेः प्रियाय ॥ २९ ॥

सर्वंसहेशितुरहं सहजस्य कर्म
सर्वं सहे न हि मया प्रतिकार्यमेतत् ।
इत्याहितक्षमतमेऽपि युवक्षमेशे
नो चक्षमे शुचममुष्य सरोरुहाक्षः ॥ ३० ॥

लक्ष्म्या अपि प्रियतमस्य चिरप्रवासा-
दुद्वेलखेदजलधावलमाकुलायाः ।
वञ्चिक्षमारमणसन्ततिवैजयन्त्याः
सन्तापशान्तिमचिकीर्षदनन्तशक्तिः ॥ ३१ ॥

यद्दूयसानभिमतं भवतीह लोके
देवस्तदेव घटयन्नरविन्दनाभः ।
राज्ञस्तथातिमहतीमपनीतिमूर्छी
नेतुं ततो निरचिनोत् सदुदर्कमन्तम् ॥ ३२ ॥

क्षेमाय वञ्चिविषयस्य स पञ्चताया
दूत्या नृपः पिटकया यदनायि शय्याम् ।
भाग्यैकभाजनमिति प्रथितस्य तस्य
मौजीवतस्तदपि तावदमानि भाग्यम् ॥ ३३

राज्ञस्तदानधिगतं जितकाशिनोऽभू-
देतद्द्वयं परमभीप्सितमायुषोऽन्ते ।
संयोजनं यदपरेण वरेण लक्ष्म्या
यच्छ्रीविशाखनृपतेरवमाननं च ॥ ३४ ॥

कस्मिंश्चिदन्यविषये कथमुत्सुका स्या-
दुत्सृज्य केरळमनंशयमेव लक्ष्मीः ।

१ मरणस्य. २ 'माङ्यःक्रोशे' इति शता. ३ पुरुषान्तरविषयेऽन्यदेशे च.
४ केरळवर्माणं केरळदेशं च. ५ वञ्चिमहाराज्ञी श्रीश्च.

सद्वृत्त एष परिपूर्णकलो विशाख-
जैवातृकश्च भुवि कैरवमाननीयः ॥ ३५ ॥

तावच्च दर्शनमदायि जनाधिपेन
व्याधिं निगूहितवता निजबान्धवेभ्यः ।
यावन्निरर्गळमपथ्यशतं निषेव्य
नीतः स निष्प्रतिविधानपथां विवृद्धिम् ॥ ३६ ॥

ज्येष्ठस्य तादृशदशां निशमय्य लोका-
च्छोकातुरोऽथ सहजप्रणयार्द्रचेताः ।
स्वस्त्रीययाप्यनुगतस्स्वयमेत्य कृच्छ्रा-
ल्लब्धान्तरो विवशमैक्षत तं विशाखः ॥ ३७ ॥

लक्ष्म्या तथापकृतया निजभागिनेय्या
यूनानुजेन च तथापकृतेन राज्ञा ।
निद्राशनादिनियमेष्वपि निस्स्पृहाभ्यां
शुश्रूषितो नृपतिरार्द्रमतिर्बभूव ॥ ३८ ॥

तेन क्षितीश्वरवरेण विशाखराजो
लक्ष्मीश्च केरळपुरातनपुण्यपाकौ ।
क्षन्तुं स्वमन्तुमनुतापवतानुनीतौ
सन्तुष्यतापि मनसा व्यथितावभूताम् ॥३९॥

आवेष्टमानमविशय्यमधीशमेन-
माविष्टविग्रहमुदग्रगदग्रहेण ।
उच्चैर्नदन्तमुरुवेदनया मुमूर्षुं
दृष्ट्वा घृणाजनि न कस्य मनस्यरीणा ॥ ४० ॥

तां यातनामनुपमां सहजस्य पश्यन्
वैवश्यवन्ति वचनानि च तानि शृण्वन् ।

---

१ वृत्तशब्दश्चरित्रे वर्तुले च. २ कला विद्या षोडशांशश्च. ३ जैवातृक आयुष्मांश्चन्द्रश्च. ४ कैर्जनैरवमाननीयः न कैरपीत्यर्थः. अत्र च कैरवैः कुमुदैर्माननीयः. ५ पक्षे केरळवर्मेत्यप्यर्थः.

अव्याजहार्दमसृणो युवराडतुच्छा-
मानर्च्छ धीरतरधीरपि शोकमूर्च्छाम् ॥ ४१ ॥

प्रेष्ठेषु तेषु सचिवादिषु सेवकेषु
तत्रागतेष्वपि तदा समुपासनार्थम् ।
प्राकाशयत् प्रणयमप्रतिमं महाराट्
प्रागात्मनोऽनभिमते युवराज एव ॥ ४२ ॥

बाल्यात् परं न तु कदापि यदन्वभावि
सौभ्रात्रमीदृगुपलभ्य तदाग्रजस्य ।
प्राह स्म तं प्रगुणितप्रणयः प्रणम्य
त्रायस्व मामिति विषादजडो विशाखः ॥ ४३ ॥

वैराग्यतस्सकलकल्मषवर्जितात्मा
श्रीरामवर्मकुलशेखरभूमिपालः ।
आरान्निवेश्य स विशाखमुदाजहार
धीराग्रतस्सरमनुग्रहपूर्वमेवम् ॥ ४४ ॥

आयुस्सुदीर्घमनपायमनामयत्व-
मैश्वर्यमक्षयमनन्तमभीष्टयोगम् ।
विद्यामवद्यरहितां विपुलां च कीर्त्तिं
पुष्णातु वत्स सततं तव पद्मनाभः ॥ ४५ ॥

धन्योऽहमद्य परचिन्मयमेमि धाम
कर्मक्षमे त्वयि समर्पितराज्यभारः ।
धर्मोऽस्मदीयकुलदैवतमित्यवेत्य
नीत्या प्रशाधि पृथिवीं कुलशेखरस्त्वम् ॥ ४६ ॥

दुर्मन्त्रिणोऽत्र बहवस्तव धार्मिकस्य
धीभिदमारचयितुं नियतं यतेरन् ।

१ सभ्रातृभावः क्रमं वा.

कामान्न जातु न भयान्न च लोभतो वा
धर्मं स्वकीयमवधीरय धीरवर्य ॥ ४७ ॥

नानाविधां स्वयमिहानुभवाच्चिरस्य
जानामि सङ्कटदशां जननायकस्य ।
विश्वस्य शश्वदनुकम्पिनि पद्मनाभे
विश्वस्य भर्तरि भज त्वमनाकुलत्वम् ॥ ४८ ॥

नारायणान्त्यजकृतप्रणयातिरेकः
प्राप्तोऽस्त्यजामिळमहीसुरवर्यसाम्यम् ।
त्वां भावयामि पुरुषोत्तम पद्मनाभ-
दासं पुरोगतमतोऽद्य मुमूर्षुरेषः ॥ ४९ ॥

आनन्दसान्द्रमधुना हृदयं मदीयं
नूनं दयेयमरविन्दविलोचनस्य ।
ज्ञानं दधद्विमलमेष भवाद्विमुक्तः
श्रीनन्दनन्दनमये परधाम्नि लीये ॥ ५० ॥

इत्युक्त्वा स जहावसूनसुहृदां भीष्मोऽथ भीष्मोपमो
वञ्चिक्ष्मापतिवंशमौक्तिकमणिः श्रीरामवर्मप्रभुः ।
मोरस्ताडमपास्तधैर्य्यमरुदन्नुचैर्विशाखादय-
स्तावद्राजकुलं बभूव सकलं सन्तापभाराकुलम् ॥ ५१ ॥

असहायमहो विहाय हा मां
क्व गतोऽसि प्रियसोदर त्वरावान् ।
करवै किमहं गरीयसी भूः
शिरसि न्यासि ममेत्यरोदि राज्ञा ॥ ५२ ॥

सहजसौहृदविह्वलधीस्ततो
बहु विलप्य स बन्धुजनैस्सह ।

[1] नारायणनामान्त्यजः शूद्रश्चरमपुत्रश्च नारायणान्त्यजः. [2] अजामिळो भागवतोपाख्यभतः.

अपरिहार्यतयोपनतां धुरं
नृपवरो जगृहे महतां मतः ॥ १३ ॥

कृतौर्ध्वदेहिको गुरोर्विशाखभूपतिस्ततः
स्वमुस्सुतां प्रियेण सङ्गतां विधातुमञ्जसा ।
निरोधितं निकेतने निजे चिराय केरळं
पुरोदरे समानयत् स मानदो मनीषिणाम् ॥ १४ ॥

जटिलेन हर्षजलधौ च पादयोः
पतितेन तेन नृपतिस्तपस्विना ।
उदवीवहत् पुनरुदूढकौतुकां
भगिनीसुतां मुकुन्दपुरनीराधिः ॥ १५ ॥

दम्पत्योश्चिरविरहार्तयोस्तयोर्यः
सम्पन्नस्सपदि हृदि प्रमोदभारः ।
तद्धेतोः कथमिव कथ्यते विशाख-
श्रीरामक्षितिरमणस्य पुण्यभूमा ॥ १६ ॥

नित्यं यज्ञैर्भूरिभिराराधितलेखः
श्रीमद्बाहाह्रेपितकल्पद्रुमशाखः ।
दास्येन श्रीजानिमसेविष्ट विशाखः
श्रीरामक्ष्मामण्डलनीहारमयूखः ॥ १७ ॥

जातः केरळमण्डलोदरगते श्रीपद्मभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
नेतृभ्रातृमहीमहेन्द्रचरमावस्थाचरित्रैर्भृतः
काव्ये तस्य कृतौ विशाखविजये सर्गोऽगमत् पञ्चमः ॥ १८ ॥

इति श्रीविशाखविजये पञ्चमः सर्गः



१ कौतुकं कुतूहलमुद्वाहसूत्रं च.

## षष्ठः सर्गः

श्रिया प्रियावन्तमनन्तशायिनं
निरन्तरं चिन्तयता यतात्मना ।
विशाखवंशक्षितिपृत्रभेदिना
सनाथतामाप बुधोत्करश्चिरात् ॥ १ ॥

शुभे दिने सारमनामात्मनः
कुलस्य देवं प्रयतः प्रणम्य तम ।
अयान्महाराजधुरां विशाखराट्
तदीयकारुण्यसुधाप्लुतस्ततः ॥ २ ॥

अथैष पूर्वैरवनीशपुङ्गवै-
रधिष्ठितं काञ्चनरत्नचित्रितम् ।
विशाखसिंहो महनीयमासनं
सुमेरुशृङ्गाभमभूषयत्तराम् ॥ ३ ॥

महाजनैरावृतमादरोद्धुरै-
र्विशाखराजः कुलशेखरस्मदः ।
उपेत्य भद्रासनमेष भूषय-
न्नुदाजहारैवमुदारपौरुषः ॥ ४ ॥

अहो कथंकारमहं महाजना-
निहाभिसंबुध्य किमप्युदीरये ।
गभीरतां प्रस्तुतवस्तुनोऽधुना
विचिन्तयन्नन्तरुदीतसात्त्विकः ॥ ५ ॥

जगन्नियन्त्राहमनन्तशक्तिना
गरिष्ठयोच्चैर्धुरयास्मि योजितः ।

१ बुधा विद्वांसो देवाश्च. २ उदीता उत्पन्नाः सात्त्विकाः 'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः' इत्युक्तलक्षणा विकारा यस्य सः. उत्पूर्वाद् इधातोः क्तप्रत्यये उदीतेति रूपम्.

नगाधिनाथस्य भरान्महत्तरो
भरो न पुंसामिह विद्यते यतः ॥ ६ ॥

अभूतसादृश्यविभूतिभाग्यभाग्
विभाति सा भारतचक्रवर्तिनी[1] ।
यदीयसाम्राज्यमदीनमेधते
मदीडितं शश्वदुदीतभावुकम् ॥ ७ ॥

स्वराज्यवास्तव्यतदीय[2]मन्त्रिणा[3]
महासनेऽस्मिन् मम पूर्वजन्मनाम् ।
महीपतीनां निहितो महात्मना-
मवैमि बाढं निजकृत्यगौरवम् ॥ ८ ॥

निजां च जानामितमामनर्हतां
महीयसेऽस्मै मनुजेशकर्मणे ।
क्व मामकं मानसदेहयोर्बलं
क्व दुष्करोऽसंख्यजनावनक्रमः ॥ ९ ॥

विचिन्तयैवं विधुरीकृतोऽप्यहं
विलोकये धैर्यनिमित्तमेकतः ।
अधारि यत्पूर्वनृपैश्शताधिकाः
समा[4] महाराज्यधुरीणसौहृदम्[5] ॥ १० ॥

शरच्छतात्प्राक् स्वरितः[6] सपादतो[7]
जगाद मार्तण्डनृपो महामतिः ।
स्वभागिनेयं दशमीं दशां गमी[8]
स रामराजं परमं हितं वचः ॥ ११ ॥

---

१ Her Majesty Queen Victoria, Empress of India. २ तदीयेत्यस्य भारतचक्रवर्तिनीसंबन्धीत्यर्थः. ३ The British Resident Mr. A. Mac-Gregor. ४ समा इत्यत्यन्तसंयोगे द्वितीया. ५ महाराज्यधुरीणा भारतचक्रवर्तिनीप्रतिनिधिप्रभृतयस्तेषां सौहृदम्. ६ स्वः स्वर्गं इतः प्राप्तः. ७ सपादतः पञ्चविंशतिवर्षसहितादित्यर्थः. ८ गमी गमिष्यन्. 'भविष्यति गम्यादयः' (३-३-३) इति साधुः.

इमेऽधिगच्छन्त्युरुविक्रमाः क्रमा-
दिहातुलं प्राभवमान्तरीपकाः[1] ।
अतस्त्वमेतज्जनमोह्यदार्जने
यतस्व शश्वद्गतसंशयाशयः ॥ १२ ॥

यदा महाराज्यनिदानमार्जय-
ज्जयं[2] स[3] कोऽपि प्रथितोऽन्तरीपजः ।
तदा वचस्तेन महात्मनेरितं
विघूर्णतेऽद्यापि मदीयकर्णयोः ॥ १३ ॥

अमानुषेणाभिहितं[4] क्षमाभृता
गरिष्ठमारं वचनं चिराय तत् ।
ममान्ववायेऽत्र परम्परागतं
किमप्यनर्घं ध्रियतां यथा धनम् ॥ १४ ॥

इदं ममाश्वासदमन्यदप्यदो
यदग्रजो राज्यमचीकरत्स्थिरम् ।
क्रमात्समाधानसुखाभिवृद्धिभिः
प्रजाः समायोज्य नयं प्रवर्तयन् ॥ १५ ॥

समृद्धिमन्ति द्रविणानि साम्प्रतं
समर्थता कर्मकरेषु चाधिका ।
परिष्कृतेष्वध्ययनप्रचारतो
जनेषु भूयस्यपि नीतिनिष्ठता ॥ १६ ॥

अनेककर्माणि जनोपकारका-
ण्यनल्पमद्यादधते सुखं नृणाम् ।

---

१ अन्तरीपे द्वीपे जाता आन्तरीपका हूणाः. 'धूमादिभ्यश्च' (४-२-१२७) इति शैषिको वुञ्. मार्तण्डनृपस्य वच इदं पद्यम्. २ The Victory of Plassey. ३, Lord Clive. ४ मार्तण्डनृपेण. ५ अवतिष्ठनाम्. धृङ् अवस्थाने तुदादिः.

अतीतकाले मनुजैरनूह्यया
विचित्ररीत्या विरचय्य लाघवम् ॥ १७ ॥
अमीभिरुच्चैरनुकूलकारणै-
र्मम श्रमः स्यादधुना लघूकृतः ।
भवेद्गुरुस्मद्वशवर्तिनस्तथा
तनिष्ठयत्ना विषयाधिकारिणः ॥ १८ ॥
अवैमि सन्दर्भविशेष ईदृशे
बहून्यतेयुर्जनतामनोरथाः ।
यथायथोच्चैः प्रसरन्ति ते तथा-
तथा लभेरन्नपि भङ्गसङ्गतिम् ॥ १९ ॥
स विश्रुतो भारतचक्रवर्तिनी-
गृहीतसाम्राज्यधुरो नवागतः ।
उपेत्य मुम्बापुरमन्तरीपजः
प्रसङ्गमध्ये कथिदेवमूचिवान् ॥ २० ॥
रणाय सन्नह्यति यो भटाग्रणीः
स वीरवादान् न विधातुमर्हति ।
अतः प्रतिज्ञा रचयामि नोच्चकैः
करिष्यमाणं प्रति सम्प्रतीह वः ॥ २१ ॥
तदेव मन्ये वरमत्र यत् स्वयं
मदीयकर्माणि समीक्ष्य तत्त्वतः ।
अपक्षपातेन जनेन धीमता
क्रियेत तेषां गुणदोषनिर्णयः ॥ २२ ॥
यदत्र कृत्यं मम हिन्दुदेशजाः
प्रजा निजां च प्रति चक्रवर्तिनीम् ।

१ तनिष्ठा अत्यल्पा यत्ना येषां ते. तनुशब्दादतिशायन इष्ठप्रत्ययः २ Lord Ripon, the Viceroy. उत्तरश्लोकत्रयं तद्वचनम्. ३ Bombay.

विधातुमेतत् सततं यतिष्यते
　स्वधीविकासावधि जाग्रता मया ॥ २३ ॥

तदीयवाण्यामिह[1] चक्रवर्तिनी-
　पदास्पदे श्रीपरदेवतापदम् ।
निवेशयन् हिन्दुपदास्पदे पुन-
　र्वदामि तां[2] वञ्चिपदं च कल्पयन् ॥ २४ ॥

चिराय मत्पूर्वनृपेषु यद्बभुः
　सुधीजनाः सौहृदमान्तरीपकाः ।
सदा तदव्याहतमेव मय्यपि
　प्रवर्तयेरन्निति विश्वसिम्यहम् ॥ २५ ॥

अजस्रमप्यादरभारमेदुरा
　ममापि वृत्तिर्भविता न संशयः ।
निजप्रजानां च सुखाभिवृद्धये
　श्रमो यथाशक्ति विधास्यते मया ॥ २६ ॥

तथा स पुष्णातु न ईश्वरेश्वरो
　विवेकमुख्याननणीयसो गुणान् ।
यथा प्रगल्भेमहि वोढुमीदृशीं
　धुरं गरिष्ठामपि पुण्यभूयसीम् ॥ २७ ॥

इति क्षितिक्षित्कुलशेखरस्य त-
　द्गभीरसारार्थमनुद्धतं वचः ।
अमन्दमुद्यद्बहुमानभक्तिभिः
　सभाजनैः सादरमभ्यनन्द्यत ॥ २८ ॥

अनेन साम्राज्यमवाप्य सूरिणा
　करिष्यमाणस्य सभासु भूरिशः ।

१ इह अस्याम्. रणायेत्यादिपद्यत्रयीरूपायामित्यर्थः. २ तां तदीयवाणीम्.

अनेकसूक्तिश्रुतिमण्डलस्य स
प्रसङ्ग एष प्रणवत्वमासदत्[1] ॥ २९ ॥

अथैनमानन्दघनो जनोत्करः
स्फुरन्तमुच्चैः कुलशेखरश्रिया ।
हिरण्मयान्दोलिकया पुरोदरे
नरेश्वरं संचरमाणमैक्षत[2] ॥ ३० ॥

अयत्त राज्याङ्गपरम्परा चिरा-
दभूतपूर्वामथ कामपि श्रियम् ।
अनन्तकल्याणगुणार्णवं नवं
निषेवमाणा निजमीश्वरं तदा ॥ ३१ ॥

शशाङ्कसंवर्षिणि वक्त्रपङ्कजे
विशाखराजस्य विलोचनालयः ।
समं निपेतुः सहसा पुरौकसा-
ममन्दसौन्दर्यमरन्दगृध्नवः ॥ ३२ ॥

उदात्तगम्भीरगुणोत्तरस्तदा
प्रजासु कारुण्यरसार्द्रया दृशा ।
तदीयभव्यैकपरत्वमात्मनः
प्रकाशयामास विशाखवज्रिराट् ॥ ३३ ॥

नवेन[3] धात्रीपतिना तदामुना
पृथुप्रतापप्रथमानकीर्तिना[4] ।

---

१ यथा श्रुतीनां प्रणव आदिमः, तथा तन्निरूप्यमाणसूक्तीनामयं वागुपन्यास आदिम इति भावः. रूपकमलंकारः. २ राज्याभिषेकोत्सवे शिबिकामधिरुह्य राजानो नगरं प्रदक्षिणीकुर्वन्तीत्याचारः. संचरमाणमिति 'समस्तृतीयायुक्तात् (१-३-५४) इत्यात्मनेपदम्. ३ नवेन नूतनेन. अथवा नवेनधात्रीपतिनेत्येकं पदम्. नशब्दसमासश्चायम्. वेनधात्रीपतिभिन्नेनेत्यर्थः. अनृशंसेनेति यावत्. पुरा किल वेनाख्यो लोकहिंसकः कश्चन राजा बभूवेति पौराणिकी कथा. ४ पृथुशब्देऽपि श्लेषो ज्ञेयः.

अथादिर्यं बभ्रिवसुंधरा चिरा-
　　दनोपमां कांचिदपेतपापताम् ॥ ३४ ॥

कवीन्द्रसंसत् सुमनोभिनन्दिते
　　विशाखभूपाभ्युदयेऽकिरद्गिरः ।
उदित्वरामोदरसा लसद्रुचि-
　　र्वसन्तकाले पिकमण्डली यथा ॥ ३५ ॥

विशाखमासाद्य निजाधिनायकं
　　विराजमानानुपमानशक्तिकम् ।
विशोकमासीत् सुमनःकदम्बकं
　　विषादमापुर्विबुधद्विषोऽधिकम् ॥ ३६ ॥

क्षमामिमां बिभ्रति सावधानया
　　नयानुयायिन्यनिशं मनीषया ।
विशाखभूभर्तरि विश्वदेहिनां
　　मनांसि विश्वासमनश्वरं दधुः ॥ ३७ ॥

अलङ्घनीयत्वनिमित्ततां गता
　　गभीरता या गदिता च तुङ्गता ।
नदीनतां बिभ्रति भूभृतांवरे
　　द्वयं तदासीन्मिलितं मनस्विनि ॥ ३८ ॥

---

१ अनोपमां अनुपमामित्यर्थः. 'अन' इत्यपि निपातोऽस्तीति भोजमतम्. २ सुमनोभिर्विद्वद्भिः पुष्पैश्च. ३ उदित्वर उत्पन्न आमोदरसः संतोषरसो यस्याः सा. लसन्ती दीप्यमाना रुचिः पारितोषिककनककवलयादिद्युतिर्यस्याः सा. इति कवीन्द्रसंसत्पक्षे: पिकमण्डलीपक्षे तु उदित्वरामोदा उत्पन्नपरिमला ये रसालाश्चूतास्तेषु सती रुचिरभिलाषो यस्याः सा. उपमालंकारः. ४ विशाख राजानं षण्मुखं च. ५ शक्तिर्बलमायुधविशेषश्च. ६ सुमनःकदम्बकं विद्वत्समूहो देवसमूहश्च. ७ विबुधद्विषो दुर्जना असुराश्च. प्रकृताप्रकृतश्लेषोऽलंकारः. शब्दशक्तिमूलध्वनिर्वा. ८ दीनो न भवतीति नदीन उदारः. नशब्दसमासः. अथ च नदीनां इनः प्रभुः समुद्रः. तस्य भावस्तत्ता ताम्. ९ भूभृतां राज्ञाम्, अथ च पर्वतानाम्. न्याय्यः खलु नदीनत्वभूभृद्वरत्वोभयवति गाम्भीर्यतुङ्गत्वयोः समावेशः, यतो नदीनत्ववति गाम्भीर्यं भूभृद्वरत्ववति च तुङ्गत्वं नियतमुपलभ्यते. 'तुङ्गत्वमितरा नाद्रौ नेदं सिन्धावगाधता, अलङ्घनीयताहेतुर्द्वयं तन्मनस्विनि:' इति माघः.

भ्रमप्रमादस्खलितोज्झितो नृप-
स्तथाधिकारं निरवर्तयन्निजम् ।
यथा नवीनोऽपि जनैरतर्क्ययं
चिराय राज्यस्य धुरं धरन्निव ॥ ३९ ॥

अयन्त्रयद्यान् निगलैरनागसो
जनान् स[1] नागर्क्षजरामवर्मराट् ।
विशाखभूजानिरमूनमूमुच-
द्विचक्षणः शिक्षणरक्षणक्रमे ॥ ४० ॥

करश्चिरादप्रतिपादितो जनै-
रनेकलक्षप्रमितत्वमागतः ।
कुसीदमन्याय्यमनिच्छतामुना
प्रहापितोऽभूत् प्रकृतिप्रियैषिणा ॥ ४१ ॥

चिराय जीर्णीभवतः पुरातनान्
नराधिपो नीवृति देवतालयान् ।
अकल्पयन्नेतुमयं नवीनता-
मनल्पसंख्यं प्रतिहायनं धनम् ॥ ४२ ॥

बहूनथाश्लेषजराजमाश्रितान्
कृतापराधानपि कांश्चिदात्मनि ।
विशाखभूपो गहनाशयोऽधिनो-
द्धनोत्करेण प्रतिकूलशङ्किनः ॥ २३ ॥

अतीव ताम्यत्यहितारजन्मनः
क्षितीशितुः सेवकचातकोत्करे ।
प्रहर्षयन्नेष धनानि जीवना-[2]
न्यवर्षदुच्चैरवनीघनाघनः[3] ॥ ४४ ॥

१ सः अतिक्रान्तः. नागर्क्षज आश्लेषनक्षत्रजन्मा चासौ रामवर्मराट् चेति तथा. अयं च रामवर्मा विशाखस्य पूर्वजः. २ जीवनानि प्राणधारणसाधनानि जलानि च. ३ घनाघन इन्द्रो मेघश्च.

सुखार्थमावश्यकमर्थमर्पय-
न्नकृत्रिमप्रेमरसार्द्रया धिया ।
प्रहर्षयामास निजान्ववायजा-
नजातशत्रोः सदृशो विशाखराट् ॥ ४५ ॥

मनीषिभिः पूर्वनृपालपुंगवै-
रुपार्जितं संस्कृतपुस्तकोत्करम् ।
अशाद्विशाखः कतिचिद्विपश्चित-
श्चिराद्गुणैकेक्षितमाशु रक्षितुम् ॥ ४६ ॥

अनुष्ठितान् प्राक्तनपार्थिवैश्चिरा-
दनेकधर्माननवद्यकीर्तिभिः ।
निजाग्रजेनाचरिताननादरा-
दसौ गरिष्ठादरतोऽनुतष्ठिवान् ॥ ४७ ॥

स भद्रदीपाख्यविधिः सुधीरितः
कृतः पुरा यः कृतवीर्यसूनुना ।
पुनस्तथाकारि चिराद्यथाविधि
प्रथिष्ठपुण्येन विशाखभूभुजा ॥ ४८ ॥

चिराय कुल्याघटनाय दारणं
गिरेर्यदारम्भि निजाग्रजाज्ञया ।
स्वकीयशक्त्यैव विशाख एव तत्
किमत्र चित्रं समपूरयद्द्रुतम् ॥ ४९ ॥

मनोविनोदाय तनोः सुखाय च
प्रतिष्ठमानो नगरान्तरं प्रति ।
तरन् सुरुङ्गां तरितञ्जेन तां
जनोपयोगाय नृपः समादिशत् ॥ ५० ॥

---

१ अजातशत्रुर्युधिष्ठिरः. २ सुधिया व्यासेन ईरितः ब्रह्माण्डपुराणे कथितः. ३ गिरेः चक्कलाख्यक्षेत्रगतस्य कस्यचित्पर्वतस्य, अथच क्रौञ्चस्य. ४ पौरुषेण, आयुधविशेषेण च. ५ विशाखः प्रस्तुतः षण्मुखश्च. ६ तां सुरुङ्गां पूर्वोक्तगिरिसुरुङ्गाम्.

दिगन्तरादेत्य दिदृक्षया ततः
किरन्तमत्रामलकीर्तिकौमुदीम् ।
कुतूहलोत्फुल्लविलोचनो जनो
ददर्श राजानम्[1] अमुं नवोदितम् ॥ ९१ ॥

नराधिभर्तुर्नगरान्तरस्थिते-
र्निरामयत्वे नितरां भवत्यपि ।
चिरायितुं नायमपारयद्बहि-
र्गरीयसा कार्यभरेण यन्त्रितः ॥ ९२ ॥

मनीषिणं द्वेष्यतयापि निश्चितं
जहावसौ नैव महामतिर्नृपः ।
अकर्मठं सेवकमार्तबन्धुर-
प्युपासयामास वितीर्णवेतनम् ॥ ९३ ॥

[2]सर्वाधिकारिपदमन्वितम्[3]अन्यथार्थं
मेने समस्तहृदयार्तिविधानशीले ।
यस्मिन् कुशाग्रधिषणस्तमपास्य तस्य
स्थाने नृपो न्यधित कंचन नीलकण्ठम् ॥ ९४ ॥

एष द्वेष्टि भुजंगवर्गम्[4] अमुना मेऽघध्वनिं[5] शृण्वता
जोषं न क्वचिदास्यते भृशमितो बिभ्यत्यमी जिह्मगाः[6] ।
शक्तो मामकपत्रभावम्[7] अधिगन्तुं नीलकण्ठोऽयमि-
त्यालोच्यैनमुदग्रशक्ति[9]रबुधद्वेषी विशाखो[10]ऽग्रहीत् ॥ ९५ ॥

अमात्यवरमादिशत्तदनु नागनारायणं
स्वनीवृति परिष्कृतीर्बहुविधा विधातुं नृपः ।

---

१ राजानं नृपं चन्द्रं च. २ सर्वेषां राजकार्याणामधिकारीत्येतादृशार्थकम्. ३ सर्वेषामाधिं मनोदुःखं कर्तुं शीलमस्येत्येवंविधार्थकम्. ४ भुजगवर्गं विटवर्गं सर्पवर्गं च. ५ मे मम अघध्वनिं दोषवार्तां मेघध्वनिं घनगर्जितं च. ६ जिह्मगाः कुटिलगामिनः सर्पाश्च. ७ मामकपत्रभावं मदीयलेखाभिप्रायं मदीयवाहनत्वं च. ८ नीलकण्ठः पुरुषविशेषो मयूरश्च. ९ उदग्रशक्तिः प्रचुरबलवान् आयुधविशेषयुक्तश्च. १० विशाखो राजा षण्मुखश्च.

अवेक्ष्य पुनरक्षमं तमिह धीमतां संमतात्
सनामकमकल्पयत् सचिवपुंगवं वैष्णवम् ॥ ५६ ॥

प्रागेव प्राप्तसख्यः प्रथितगुणगणे पार्थिवेन्द्रे प्ररूढ-
प्रेमा रामाभिधानः स हि धरणिसुराग्रेसरो भासुरात्मा ।
राज्ञा दत्तं तदाज्ञाकुसुममनुपधिस्नेहमाध्वीरसार्द्रं
मौलौ विन्यस्य तस्य प्रवरसचिवतामग्रहीद्भक्तिपूर्वम् ॥ ५७ ॥

प्रयत्नादेतेन प्रणिहितमनीषेण न चिरात्
पुराजाताकृत्यप्रतिविधिरुपाक्रामि बहुधा ।
अतीतानीतिप्रावृषि समुदिता सा कलुषता
गता रामामात्यप्रवरशरदारम्भसमये ॥ ५८ ॥

नृपकुलतिलकस्य श्रीविशाखस्य कीर्त्या
सपदि कलितपूर्त्या संभृताश्चर्यभूमा ।
धृतकुतुकमथैनं द्रष्टुकामोऽदनीयं
नगरवरमुपाच्छन्मद्रभर्ता स राजा ॥ ५९ ॥

भूपाश्च भुवि भूरिशः खलु मया दृष्टाश्च संभाषिता
नैतादृग्बहुमाननीयचरितः कश्चिद्विपश्चित् क्वचित् ।
इत्याश्चर्यतरङ्गितः क्षितिपतेरत्यादरातिथ्यतः
प्रीतश्च प्रतिजग्मिवान् स पुरुषप्रष्ठः पुरीमात्मनः ॥ ६० ॥

विद्वन्मौलिर्विशाखक्षितिरमणमणिर्विश्वविख्यातकीर्तिः
प्रेयानन्तेवसन् मे खलु सुहृदसुहृत् प्राप्तराज्योऽयमिन्धे ।
धीरोऽस्यास्मत्सतीर्थ्यो धृतसचिवधुरो वैष्णवोर्वीसुरश्चे-
त्यागाच्छ्रीमाधवार्यो जनपदमुदयत्कौतुकं तावदेतत् ॥ ६१ ॥

१ सनामकं रामनामकमित्यर्थः. २ कलुषता स्थायुकादीनाम् ... ग्राहित्वादिरूपं पापवत्त्वम्, अथ च जलादीनामाविलत्वम्. ३ Duke of Buckingham, Governor of Madras. ४ अन्तेवसन् शिष्यः. ५ विशाखराजस्य गुरुर्बहुभिर्महाराजैः पर्यायदत्तमुख्यामात्याधिकारो बहुविधविरुदशाली मधवाभिधानो माहाराष्ट्रः कश्चिद्ब्राह्मणो माधवार्यशब्दार्थः.

कष्टा या भृशमत्र नीवृति दशा कालाच्चिरात् पङ्क्तिमा
दुष्टामात्यजनार्जिताजनि पुरा राज्यव्यपायोन्मुखी ।
तामेको य उदारधीरविधुरः श्रीमाधवार्यः स्वया
दूरीकृत्य धियाभिनोज्जनमनो धीरः स जय्यादयम् ॥ ६२ ॥

इत्यादिस्तुतिमुखरेषु सज्जनेषु
क्षित्याखण्डलविहितोपचारकृत्यैः ।
अत्यानन्दितहृदयः स मन्त्रिराजः
प्रत्याढौकत निजमास्पदं वितन्द्रः ॥ ६३ ॥ (युग्मकम्)

प्रजानां क्षेमाय प्रतिदिवसमायस्य बहुशो
विशाखश्रीवञ्चिक्षितिरमणचूडामणिरमौ ।
परिष्कुर्वन्नुर्वीभरणपरिपाटीं पटुधियां
वरिष्ठः श्रीजानेरकृत वरिवस्यामकृतकम् ॥ ६४ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
सर्गस्वर्गसरिन्निरर्गळगळद्धाराळवाचः कृतौ
काव्ये नायकराज्यलाभसुभगष्षष्ठोऽस्य निष्ठामगात् ॥ ६५ ॥

इति श्रीविशाखविजये षष्ठः सर्गः

## सप्तमः सर्गः

श्रीमत्यां पुरि विहरन् विशाखराजो
राजीवेक्षणचरणारविन्दवन्दी ।
वृत्तान्तानाखिलादगन्तरादजाना-
द्विश्वस्तैः प्रणिधिजनैर्विविक्तमन्त्रः ॥ १ ॥

नीतिज्ञे निपुणधियामिहाग्रगण्ये
पुण्येन क्षितिमवति प्रजास्समस्ताः ।

प्रज्ञाय प्रणिहिततताममुष्य दुष्ट-
　प्रध्वंसे प्रववृतिरे न कापथेषु ॥ २ ॥

सर्वेषां सदसदुपक्रमेषु साक्षा-
　द्वृश्चिक्ष्मारमणविशालमूर्तिरग्रे ।
तिष्ठन्ती प्रणयरुषो प्रकाशयन्ती
　लग्नेव स्थितिमकरोन्मनःसु नृणाम् ॥ ३ ॥

ज्यौत्स्नीमन्वतिगतरामराजजन्या-
　मभ्युद्यत्यनुपमधाम्नि रामसूरे ।
तूष्णीकैः खलजनकौशिकैर्निलिल्ये
　सोत्साहैर्बहु जहृषे मनीषिचक्रैः ॥ ४ ॥

वैशाखक्षितिभृदजीजनज्जनाना-
　मानन्दामृतमधिचित्तदुग्धसिन्धु ।
तच्चोरान् विबुधविरोधिनो विधुन्वन्
　स्वस्थानां सुखमकरोत् सरोजनाभः ॥ ५ ॥

मान्धातृप्रभृतिमहीपतिप्रवीरैः
　प्रख्यातैरधिपृथिवि प्रतानितायाः ।
दिङ्नारीस्तनपरिधानकीर्तिशाट्या
　भूयांसं नृपतिरसावलब्ध भागम् ॥ ६ ॥

प्रायोऽत्र क्षितिपतयः कुलेश्वरत्वं
　प्राप्ताः प्राङ्‌ पुनरिदंवयोऽधिगम्य ।

१ ज्यौत्स्नीमनु चन्द्रिकान्वितरात्रेः पश्चात्. २ राजा नृपश्चन्द्रश्च. ३ कौशिका उलूकाः.' ४ 'चक्रः कोके पुमान् क्लीवं व्रजे सैन्यरथाङ्गयोः' इति मेदि॰ ५ वैशाखक्षितिभृत् विशाखानक्षत्रसंबन्धी राजा. विशाखराज इत्यर्थ., अथ च मन्दा॰चलः. ६ आनन्दामृतचोरान्. ७ विद्वद्वैरिणोऽसुरांश्च. ८ स्वस्थानां अव्याकुलचित्तानाम्, अथ च स्वर्गस्थानाम्. ९ इदंवयः अस्य विशाखस्य वयः. त्रिचत्वारिंशं वय इत्यर्थः.

रुक्मिण्याश्चरमसुतस्त्वसौ[1] तथाभू[2]-
दन्यूने[3] वयसि पचेलिमे च बोधे ॥ ७ ॥

आचारं प्रथममवेत्य धर्ममेष
क्ष्माजानिः स्थिरमकरोदिहैकतान्यम्[4] ।
राजन्यप्रवरनिषेवितान्न मार्गात्
प्रामाद्यत् क्वचिदपि धार्मिकोऽणुमात्रम् ॥ ८ ॥

नोदास्त क्वचिदपि भूपतिः स्वकृत्ये
नाकार्षीत् किमपि यथाकथा[5]चरीत्या ।
आरब्धात् फलमनवाप्य न व्यरंसी-
दारम्भं न च कृतवाननिश्चयेन ॥ ९ ॥

उत्कोचग्रहणमुदग्रमग्रजन्म-
श्रीरामक्षितिपतिराज्यभारकाले ।
यत् प्रायः कलुषयति स्म कार्यधुर्यान्
भङ्क्तुं तद्व्यवसितिमातनोद्विशाखः ॥ १० ॥

सामात्ये विदधति राज्यभारमस्मिन्
वञ्चिक्ष्मारमणमणौ विशाखवीरे ।
दुष्टानां परमजनिष्ट कष्टकालः
शिष्टानां शुभमभवन्निरन्तरायम् ॥ ११ ॥

तुल्याख्यौ नरवरमन्त्रिणावभूतां
पूर्वं याविह विषये महानुभावौ ।
क्षेमार्थं पुनरपि ताविहैव जातौ
देशस्येत्यजनि सयुक्तिका जनोक्तिः ॥ १२ ॥

१ विशाखः. २ कुलेश्वरत्वं प्राप्तः. ३ अन्यूने पर्याप्ते. राज्यभरणयोग्य इत्यर्थः. ४ ऐकतान्यं एकतानत्वम्. ५ अनादरेणेत्यर्थः. ६ पूर्वमेतत्कुलीनो रामाभिधानो राजा रामाभिधानेन मन्त्रिणा सह निष्कण्टकं वाञ्चजनपदमाशिषत्.

सारमेयाः कतिचन पूर्वमन्त्रिपक्ष्या
रामक्ष्मासुरवरमत्र मन्त्रिभिर्हम् ।
पश्यन्तः परमसहिष्णवो विदूरा-
दाक्रोशन्ननुकृतसारमेयलीलाः ॥ १३ ॥

साचिव्यं कलयति रामवैष्णवेन्द्रे
साधीयःपरिचयपक्वशेमुषीके ।
विश्रामं भृशमयमध्ययाद्विशाखो
राज्याङ्गं प्रति मतिमानिह द्वितीयम् ॥ १४ ॥

पृथ्वीशः पटुतरधीवरे स्वमन्त्रि-
प्रष्ठेऽस्मिन् प्रणिहितकर्णधारभारः ।
वञ्चिस्थान् सपदि विधाय तीर्णशोकान्
सञ्चिन्वन्नरमत पुण्यमेव पण्यम् ॥ १५ ॥

आकर्ण्य क्षितिभृदथैकदायमारा-
दत्युच्चैरवनिभृदस्ति कश्चनेति
उत्साही कनकशिखस्य तस्य मूर्ध्नि
स्वौ पादौ विनिहितवानहो महात्मा ॥ १६ ॥

तत्रस्थः स्वजनपदस्य भूरिशोऽशा-
नुत्तुङ्गक्षितिधरदन्तुरान्तरालान् ।
व्याकीर्णप्रचुरसरस्सरित्तडागा-
नालक्ष्य प्रभुरभजत् प्रमोदकाष्ठाम् ॥ १७ ॥

१ 'कौलेयकः सारमेयः' इत्यमरः. उपमालङ्कारः. २ द्वितीयं [illegible]गङ्गं अमात्यरूपम्. ३ पटुतराधियां अत्यन्तचतुरबुद्धीनां वरे श्रेष्ठे, अथ च पटुतरे [illegible]वर्ते. प्रायः केरलेषु कैवर्ता एव नाविकत्वं वहन्ति. ४ वञ्चिजनपदवासिनः. केरलीयभाषायां वञ्चिशब्देन नौरुच्यते. तेन नौस्थानित्यप्यर्थः. रूपकमलङ्कारः. ५ पर्वतो राजा च. ६ तन्नामकस्य, अथच कनकमयी शिखा चूडाभरणं यस्य तस्य.

उन्मीलद्बहळतमालनीलचेला
तुङ्गाद्रिस्तनजघना घनौघवेणी[1] ।
राजर्षेर जनितरामरण्यलक्ष्मी-
र्मोदाय स्फुटकुटचप्रसूनहासा ॥ १८ ॥

तत्रोद्यत्स्वसदृशधामतिग्मधाम-
ध्वस्तापत् सरसि सरोरुहं विलोक्य ।
स्मृत्वा स्वं भृतकमथैष केरळं[2] तं
तस्याज्ञामदित समागमाय यत्र ॥ १९ ॥

आनन्दोत्तरळितधीरथाभ्यगच्छत्
सोऽप्येनं कृतिजनसेव्यमानपादम्[3] ।
भूमीभृत्परिवृढमप्रमेयसत्त्वं
भूयिष्ठोज्ज्वलतरवारिवाहिनीकम्[6] ॥ २० ॥

पादाभ्यां दृढलघुगात्र एष गोत्रा-
पाकारिः पटुचटुलक्रमं चरिष्णुः ।
अश्रान्तः कनकशिखस्य तस्य सानौ
कृच्छ्रेण स्वपरिजनैरनुद्रुतोऽभूत् ॥ २१ ॥

आकर्षन्नहह विशाख एष पश्चा-
दात्मीयं भृतकममुं मुखे सकेकम् ।

१ घनौघः उन्नतस्थलीष्ववतीर्णं मेघवृन्दमेव वेणी केशबन्धनं यस्याः सा. अथवा घनौघा सान्द्रजलवेगा वेणी प्रवाहो यस्यां सा. अथ च नैल्यगुणेन मेघवृन्दसमा वेणी केशबन्धनं यस्याः सा. एकदेशविवर्तिरूपक समासोक्तिर्वालंकारः. २ केरळं केरळवर्मनामकम्. वञ्चिमहाराज्ञ्या विशाखमहाराजभागिनेय्या लक्ष्मीदेव्याः प्रियं एतत्काव्यकर्ता चायम्. स्मृतिमदलंकारः. विलोकनस्मरणविषययोर्ध्वस्तापत्त्वादिना सादृश्यम्. ३ पुण्यवत्सेव्यमान[illegible] विद्वत्सेव्यमानचरणं च. ४ पर्वतश्रेष्ठं राजश्रेष्ठं च. ५ बहुजन्तुकं अपरिच्छ[illegible] च. ६ भूयिष्ठानि उज्ज्वलतराणि च वारीणि यासां तास्तथाविधा वाहिन्यो नद्यो यस्मिंस्तम्, अथ च भूयिष्ठा उज्ज्वलाश्च तरवारयः खड्गा यासां तास्तथाविधाः वाहिन्यः सेना यस्य तम्. प्रकृतश्लेषः. ७ राजा षण्मुखश्च. ८ नाम्न आदौ वदने च. सकेकं केकारसहितम्. केरळमित्यर्थः, अथ च केका मयूरवाणी तत्सहितम्. मयूरमित्यर्थः.

उद्रिक्तानपुरवरानिवाद्रिकूटा-
　नाक्रम्य स्वगरिमनिर्धुतानतानीत् ॥ २२ ॥

उद्दामद्विरदकराग्ररुग्णशाख-
　द्राघिष्ठद्रुम[1]समुदायकायमानम् ।
अध्वानं क्षितिभृदगादगाधमुच्चै-
　रु[2]द्यानोदरसुखदायकायमानम् ॥ २३ ॥

प्रत्यागा[3]च्चटकवराहवप्रसृत्या
　दु[4]र्वर्णप्रबलवलीमुखप्रतत्या ।
क्षि[5]त्या ग्लौ[6]रटकवराहवप्रसृत्या
　दु[7]र्वर्णप्रभलवलीमुखप्रतत्या ॥ २४ ॥

तत्राथ क्वचिदपि केरळं धरित्री-
　वृत्रारिर्निजरथ एव संनिवेश्य ।
पर्जन्ये निशि कृतगर्जितेऽभिवर्ष-
　त्यव्याजप्रणयपयोधिरन्वगृह्णात् ॥ २५ ॥

पृथ्वीन्द्रः पुरवरमेत्य पद्मनाभ-
　प्रासादे प्रतिशरदं विधीयमानम् ।
आनन्दज्जनमथ फाल्गुनोत्सवं तं
　पूर्वस्मादधिकमपूपुपत् स्वभक्त्या ॥ २६ ॥

आमन्त्रिस्वपरिजनानुगम्यमानः
　सायाह्ने सह कुलशेखरः स्ववंश्यैः ।

१ द्रुमसमुदाय एव कायमानं कुटीरं यस्मिंस्तम्. २ उद्यानोदरे यत्सुखं तस्य दायक इवाचरतीति तथा तम्. आचारे क्यङ्. यमकभेदः. ३ चटकवराणां प्रौढकलविङ्कानामाहवस्य कलहस्य प्रसृतिः प्रसरो यस्यां तया. ४ दुर्वर्णा वर्णयितुमशक्या प्रबलानां वलीमुखानां वानराणां प्रततिः समूहो यस्यां तया. ५ क्षित्या भूमेः. ग्लौश्चन्द्रः. ६ रटकाः शब्दायमानाः. यद्वा अटकाः पर्यटनशीलाः वराहाः सूकरा यस्यां तादृशी चासौ वप्रसृतिर्वप्रमार्गश्चेति कर्मधारयः तया. ७ दुर्वर्णप्रभा रजतकान्तयो लवलीमुखा लवलीप्रभृतयः प्रततयो लता यस्यां तया. यमकभेदः.•

यात्रायामभजत पद्मनाभमेत्य
प्रासादप्रवरमुदारभक्तिभारः ॥ २७ ॥

अस्ताद्रेरटति तटं गभस्तिमालि-
न्याताम्रातपगुणितध्वजौ विमाने ।
आसीनं सहनरसिंहवासुदेवं
सेवन्ते सकलजनाः स्म पद्मनाभम् ॥ २८ ॥

दीपौघप्रसृमरदीप्तिदीपितायां
यामिन्यां दिवसविलासमापितायाम् ।
आबालस्थविरमशेषपौरजुष्टा
पुष्टाभा पुनरजनिष्ट देवयात्रा[1] ॥ २९ ॥

पञ्चानां प्रतिकृतयोऽत्र पाण्डवाना-
मंसोत्तंसितगदमग्रतः[2] स्थितानाम् ।
उच्छ्मश्रु प्रकटरदाट्टहासवक्त्रा
वित्रासं व्यदधत मुग्धबालिकानाम् ॥ ३० ॥

उन्मीलत्कमलविलासचोरपादं[3]
सर्वज्ञादृतम्[4]मृतस्फुरद्गुमेनम्[5] ।
राजानं[6] रुचिरमवीक्षमन्त तत्र
स्मेरास्याः[7] कुमुदवनीविडम्बयन्त्यः[8] ॥ ३१ ॥

देवेऽस्मिन्नघदमने[9] जगत्यधीशे[10]
देवेशोन्नतिहृति[11] रज्यदाशयानाम् ।

---

१ उत्सवसमयेषु वाहनारोपिताया देवप्रतिकृतेर्देवालयमभितः सञ्चारणं यात्रा. २ देवालयाग्रभागे. ३ पादश्चरणः किरणश्च. ४ सकलविद्वदादृतं शिवादृतं च. ५ अमृतमिव अमृतेन च स्फुरन्त्यः स्फुरन्तश्च गावो वाचो रश्मयश्च यस्य तम्. 'गोस्त्रियोः⋯' (१-२-४८) इति ह्रस्वः. ६ नृपं चन्द्रं च. ७ स्त्रियः. ८ अनुकुर्वत्यः. ९ दुःखध्वंसिनि अघासुरध्वंसिनि च. १० भूपतौ जगन्नायके श्रीकृष्णे च. ११ देवेशस्येन्द्रस्योन्नतिं मानं हरतीति तथाविधे ऐश्वर्यात् पारिजातापहाराच्चेति भावः.

नेत्रन्यक्कृतजलजव्रजाङ्गनाना-
  मानन्दं व्यतरदमन्दमुद्धवोऽयम् ॥ ३२ ॥
तत्काले तरुणतमालनीलवेण्यः
  कल्याण्यः कमपि विकारमन्तरापुः ।
आश्चर्य किमिदमपास्तशाम्बरीके
  प्रद्युम्ने स्वयमिह भाति रौक्मिणेये ॥ ३३ ॥
नीलिम्ना तुलिततमोभिरुल्लसन्त्यो
  धम्मिल्लैरुडुरुचिफुल्लमल्लिकाढ्यैः ।
बिम्बोष्ठ्यश्चकितचमूरुचञ्चलाक्ष्यो
  बिम्बोकैर्युवहृदयानि निर्ममन्थुः ॥ ३४ ॥
धैर्यं तद्धरणिपतेरहार्यसारं
  सारङ्गार्भकतरलायतेक्षणानाम् ।
नारीणामपि निकटे कटाक्षधारा-
  नाराचैर्न पुनरपारि नाम भेत्तुम् ॥ ३५ ॥
आधाय त्रिभुवनभर्तुरग्र्यपूजा-
  मुत्कृष्टे नियतमसीममुत्सवेऽस्मिन् ।
शालायामपदमघोषसंभवायां
  धन्यात्मा नृपतिरमानि धर्मजन्मा ॥ ३६ ॥

१ नेत्रन्यक्कृतजलजव्रजा नयनतिरस्कृतपद्मसमूहा या अङ्गनास्तासाम्. अथच नेत्रन्यक्कृतजलजा या व्रजाङ्गना गोपिकास्तासाम्. २ उत्सवः श्रीकृष्णेन स्वदूततया गोपीसमीपं प्रति प्रहितो यादवविशेषश्च. ३ शम्बरेण निर्वृत्ता शाम्बरी माया. ४ प्रकृष्टधने शम्बरारौ च. ५ रुक्मिण्याः तन्नामिकाया राज्याः कृष्णप्रियायाश्चापत्यं पुमान् रौक्मिणेयस्तस्मिन्. मन्मथसंनिधौ स्त्रीणां विकारप्राप्तिर्युक्तेति भावः. ६ अशक्य. जितेन्द्रियोऽयं राजेति भावः. ७ असीममिति आधानक्रियाविशेषणम्. उत्सवे महे, अथच असीममुत् अनवधिसन्तोषः. नृपतिविशेषणं चेदम्. सवे राजसूययागे. ८ देवालयान्तर्गतशालायां यागशालायां च. ९ अपदमोऽदान्तो घोषस्य कलकलस्य सम्भव उत्पत्तिर्यस्यां तस्याम्, अथच अपगतः ध्वंसं प्राप्तो दमघोषसम्भवः शिशुपालो यस्यां तस्याम्.

विप्राणां [1]भृशमदनोत्सुकत्वभाजा-
मत्यन्तं रुचिपदमुज्ज्वलान्नहारा ।
अष्टिश्रीः प्रकटितपर्पट[2]च्छटास्या
प्रेष्ठाभूद्[3]गुणगणकल्पितप्रतिष्ठा ॥ ३७ ॥

मृष्टान्नाशनमनु बालनागवल्ली-
पत्राणि क्रमुकयुतानि चूर्णितानि ।
चर्वन्तः कबलितधूम[4]पत्रखण्डा
भूदेवा विविधविनोदमन्वभूवन् ॥ ३८ ॥

माणिक्यप्रमुखमणिप्रदीप्रभूषा-
श्रेणिस्वीकरणपरायणं विटेभ्यः ।
गाणिक्यं[5] गलितविशङ्कमङ्कपालीं[6]
श्रोणिश्रीजितपुलिनं निशागमेऽदात् ॥ ३९ ॥

शुम्भन्ती सुभगसराग[7]पल्लवौघै-
रुन्मील[8]च्चलदलकान्तपत्रवल्ली ।
श्यामात्र[9] प्रमदवनी[10] च योषिदाली
पुष्पेषु[11] प्रसितमनोभिरन्वभावि ॥ ४० ॥

उन्निद्रा कुवलयिनीव नर्तकाली
नक्तं विभ्रम[12]रससमाश्रिता नितान्तम् ।

१ भृशमत्यर्थं अदने भोजने उत्सुकत्वं भजन्तीति तथा तेषाम्, अथचात्यर्थमन्मथोत्सुकत्वभाजाम्. २ धवलवर्तुलाः खाद्यविशेषाः पर्पटाः. ३ गुणाः सूदाः पातिव्रत्यादयश्च. ४ तमाखुः Tobacco. केरलीयास्तमाखुखण्डं चर्वन्ति. ५ गाणिक्यं गणिकासमूहः. ६ अङ्कपालीं आलिङ्गनम्, 'अङ्कपाली परीरम्भे धात्रीवेदिकयोः स्त्रियाम्' इति मेदिनी. ७ सरागाः शोणाः अनुरक्ताश्च. पल्लवाः किसलयानि विटाश्च. ८ उन्मीलन्तश्चलदला वृक्षविशेषा यस्यां सा च कान्तपत्रा मनोज्ञदला वल्ल्यो लता यस्यां सा चेति विशेषणसमासः, अथच उन्मीलन्तः चलदलकान्ताः चञ्चलचूर्णकुन्तलाग्राणि पत्रवल्लयः तिलकविशेषाश्च यस्याः सा. ९ नीलवर्णा यौवनमध्यस्था च. १० अन्तःपुरोचितमुपवनम्. ११ पुष्पेषु कुसुमेषु प्रसितमनोभिः आसक्तचित्तैः, अथच पुष्पेषौ मन्मथे प्रसितमनोभिः. प्रमदवनीयोषिदाल्योः प्रस्तुतत्वात् तुल्ययोगिताभेदः. १२ विभ्रमरसं विलासरसमाश्रिता, विभिः पक्षिभिर्विशिष्टैर्वा भ्रमरैः समाश्रिता च.

आमोदोद्गतिमतिमात्रमादधानो
राजालोकजमभजत् क्वचिद्विकासम् ॥ ४१ ॥

उत्क्षिप्ताः प्रहरणपाणिभिः प्रवीणै-
रुद्दीप्रा नभसि कृपाणिकाः सहस्रम् ।
कासारोदरवलमानराजिलाभाः
सन्त्रासं समजनयन्निरीक्षकाणाम् ॥ ४२ ॥

आबध्य स्थिरमिह पाशमायताभ्यां
स्थूणाभ्यां स्थपुटितमुन्नमय्य बाढम् ।
आरूढस्तमथ निबद्धहेतिरङ्गे-
र्व्यभ्यासी समजनि सभ्यसम्मदाय ॥ ४३ ॥

नर्तक्या स्थितिनियतं महिष्ठवंशं
कीर्त्या च क्षितिपतिशेखरं विशाखम् ।
चेष्टाभिः कृतजनचित्तचित्रपूर्त्या
संश्रित्य भ्रमणमकारि सर्वतोऽपि ॥ ४४ ॥

यात्रानन्तरमिह देवमन्दिराग्रे
रात्रावुद्धतनालिकप्रवर्त्यमानैः ।
प्रध्वानैः स्तनितमथार्चिषाचिरार्चि-
र्व्याचक्रे वियति घनश्च धूमराज्या ॥ ४५ ॥

निश्शङ्कं निजदयितेन नीयमाना
निश्शेषानिह निशि वीक्षितुं विनोदान् ।
निर्बाधा बहिरचरन्नृपालनीतौ
विस्रम्भाद्विकचबिसप्रसूननेत्रा ॥ ४६ ॥

१ संन्तोषोद्गमं परिमलोद्गमं च. २ राजालोकेन भूपदर्शनेन चन्द्रप्रकाशेन च जायत इति तथा तम्. ३ ऊर्ध्वं प्रेरिताः. ४ हस्तलाघवकलाकुशलैः. ५ दन्तुरितम्. ६ व्यायामाभ्यासवान्. ७ स्थिताववस्थाने मर्यादायां च. ८ महत्तरं वंशं वेणुम्, महत्तरो वंशः कुलं यस्य तं च. ९ विद्युत्.

आखेटोत्सवमथ कैटभान्तकस्य
प्रासादाद्बहिररविन्दनाभदासः ।
धानुष्कः शरनिकरेण नाळिकेरं
निर्भिन्दन्नभिनिरवीवृतद्यथावत् ॥ ४७ ॥

दैतेयप्रतिकृतिनाळिकेरभेदा-
दुद्भूतः सपदि गभीरभेरिघोषः ।
साक्षात्तद्दितिजगळोद्गळत्कराळ-
क्ष्वेळायाः सहचरतामुरीचकार ॥ ४८ ॥

मार्तण्डान्वयमुकुटावतंसरत्नं
श्रीरायक्षितिपतिरेष चारुवेषः ।
भिन्दानो ननु खरमेव नालिकेरं
भुञ्जानो धरणिभवामदीपि लक्ष्मीम् ॥ ४९ ॥

सायाह्ने पुनरपरेद्युरब्जनाभे
स्नानाय प्रचलति पश्चिमाब्धितीरम् ।
अग्रेऽभून्नृपतिरनीकिनीपरीतो
गाङ्गेयत्सरुमसितह्लजं दधानः ॥ ५० ॥

आपन्नाः शरणमपावनाः कृशानुं
रोगार्त्ता भिषजमरातयः कृतान्तम् ।
सुन्दर्यः सुमशरमाश्रिताः सुरद्रुं
विद्वांसः सुहृदममंतावनीन्द्रम् ॥ ५१ ॥

प्राकारात् प्रभृति पयोनिधेस्तटान्तं
पन्थानं शशिकरशुभ्रवालुकौघम् ।
क्षौमैरास्तृतमिव मण्डयन् पदाभ्यां
नेत्रानन्दथुमपुषन्नृपो जनानाम् ॥ ५२ ॥

---

१ मार्तण्डस्तन्नामको राजा सूर्यश्च. २ कठिनं राक्षसविशेषं च. ३ भूमि-सम्भूतां सीतां च. ४ सुवर्णखड्गमुष्टिम्.

को वास्मिन्नजितमहोत्सवे न ताव-
ज्जीवात्मा प्रभुमभजत् प्रतोळिकायाम् ।
देवानामपि कुलमालयान्तरस्थं
मेवायै सरसिरुहाक्षमन्वयासीत् ॥ ५३ ॥

सौधानामुपरि तदा गवाक्षलक्ष्यं
वामाक्षीवदनकदम्बमम्बुजाद्विट् ।
व्याचक्रे कुरळकळङ्कितं सहस्रं
घस्रेऽपि प्रतिनवचन्द्रमण्डलानाम् ॥ ५४ ॥

राजर्षेरजनि मनःसरोजमुद्रा
भद्राङ्गीवदनतुषारभानुभिस्तैः ।
धूर्तानामतनुविकासमार्पितेषु
स्फारामोदिषु कुमुदेषु मानसेषु ॥ ५५ ॥

आलोकादखिलसुखावहस्य तावत्
पूर्णेन्दोरवनिपुरन्दराननस्य ।
निष्यन्दः कळवचनामृतस्य जातः
कोऽप्यास्याद्युवतिजनस्य चन्द्रकान्तात् ॥ ५६ ॥

पालाशोष्णीषशोभापरिगतनिटिलः पद्मपत्रायताक्ष-
स्तुङ्गभ्राजिष्णुनासस्तुलितपरिणमद्बिम्बकम्राधरोष्ठः ।
कम्बुग्रीवः कवाटप्रतिभटविकटोरस्तटः शातकुक्षिः
कुक्षित् सुक्षत्रियो मे किरति सखि दृशोरेष पीयूषवर्षम् ॥ ५७ ॥

यस्यामस्यानुरागो मनुजपरिवृढस्यावनीमीनकेतो-
र्मन्ये धन्येह सा केवलमवनितले मानिनी माननीया ।
प्राग्जन्मन्येतयातप्यत किमपि तपो दुष्करं पुष्कराक्ष्या
येन श्रीवञ्चिभूमेः स्वयमियमधुना वीरपत्नी सपत्नी ॥ ५८ ॥

१. कुरलाश्चूर्णकुन्तलाः. २ दिने. ३ कामस्फूर्तिं अनल्पविकचतां च. ४ अधिकसन्तोषवत्सु अधिकसौरभ्यवत्सु च. ५ कुत्सिता मुदा मुत्-'आप चैव हलन्तानां' इत्याप्-येषां तेषु, अथच कैरवेषु ६. दर्शनात् प्रकाशाच्च. ७ शशिसुन्दरादुपलविशेषाच्च. ८ 'पालाशो हरितो हरिद्' इत्यमरः. ९ कु भूमिं क्षियति इति कुक्षित् भूमीश्वरः.

इत्याद्यत्यादरनिरधिकोत्कण्ठमुत्कण्ठमुक्ताः[1]
पश्यन्त्योऽमुं परभृतगिरः पञ्चमं भाषमाणाः ।
आशापाशैर्नृपगुणगणग्रथ्यमानैर्बबन्धुः
प्राणानन्तःप्लवनमनसोऽप्येणशावेक्षणास्ताः ॥ ५९ ॥

अम्भोराशेरथ नरवरे तीरमाढौकमाने
व्यूढाः प्रौढैर्भटपरिवृढैः पार्श्वयोः कौशलेन ।
पत्तिव्रातस्तुरगपृतना कुञ्जराणां घटा च
श्रेणीभूता विदधुरुचिताचारमुद्यत्पताकाः ॥ ६० ॥

कल्लोलस्खलदम्बुशीकरमिषादाचारलाजाञ्जलिं
व्याकीर्य श्वशुरेण[2] फेनपटलच्छद्मस्मितोद्भासिना ।
प्रत्युद्यातम[3]थ श्रियः प्रियतमं विश्रान्तमस्यान्तिके
सद्यः श्रीकुलशेखरः सहपरीवारः समाराधयत् ॥ ६१ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
सर्गः फल्गुनबन्धुफाल्गुनमहारम्भप्रियम्भावुकः
काव्ये तस्य कृतौ समाप्तिमगमत् सर्वोत्तमः सप्तमः ॥ ६२ ॥

इति श्रीविशाखविजये सप्तमः सर्गः

अष्टमः सर्गः

श्रीविशाखकुलशेखरस्ततः
प्राविशत् परिसरोपकारिकाम् ।
भावि तावदभिषेकमङ्गळं
सेविता स्वकुलदैवतस्य तत् ॥ १ ॥

सौधवर्यमधिरुह्य भूपति-
र्भूषणौघमपहाय देहतः ।

१ उद्गतकण्ठं यथा भवति तथा. २ लक्ष्मीजनकेन समुद्रेण. ३ प्रत्युद्गतम्.

चारुमारुतमसेवत क्षणं
　भानुमत्युदधिमज्जनोन्मुखे ॥ २ ॥

मन्दमन्दमरविन्दबान्धवो
　बन्धुजीव इव बन्धुरद्युतिः ।
अस्तशैलशिखरावतंसता-
　मासदत् क्रमबिकस्वराकृतिः ॥ ३ ॥

पाथसामधिपतेः परिग्रहे
　स्फायमानरुचिनांशुमालिना ।
पाटवं बहुविधं प्रकाशितं
　पात एव तु ततोऽध्यगम्यत ॥ ४ ॥

यत् किमप्यहह कामनीयकं
　पश्चिमां दिशमशोभयत् तदा ।
अन्तरिक्षमवनिर्महोदधि-
　स्तेन सर्वमभजत् प्रसन्नताम् ॥ ५ ॥

अभ्रशैलशिखरात् परिच्युतो
　गण्डशैल इव मण्डलो रवेः ।
पातचूर्णितशरीरगैरिकैः
　पाटलच्छविभिरानशे दिशः ॥ ६ ॥

सान्धिवेलजलदाः समुल्लस-
　ल्लोहिताम्बरसुवर्णभासुराः ।
सैनिकप्रवरसन्निभा बभु-
　र्भ्रष्टतां भजति भानुर्मण्डले ॥ ७ ॥

भानुभानुनिकरानुबिम्बना-
　द्वारिराशिरपि भूरिचारिमा

१ प्रतीच्यां दिशि कलत्रे चेत्यर्थः. २ रुचिः शोभा प्रीतिश्च. ३ अब्धौ पतनं नरके-पतनं च. समासोक्तिरलंकारः. ४ संधिवेलायां भवाः सांधिवेलाः, ते च ते जलदाश्चे-ति तथा. ५ समुल्लसतो लोहितस्याम्बरस्याकाशस्य शोभनेन वर्णेन, अथच समुल्लसद्भिः शोणवसनैः कञ्चुकसम्बन्धिभिः हेमभिश्च भासुराः. ६ बिम्बे राज्ये च. ७ चारुशब्दा-त् 'पृथ्वादिभ्य' इति भाव इमनिचि चारिमन्शब्दः.

गर्भनिर्भरितवाडवानल-
ज्वालजालनवलीलयालसत् ॥ ८ ॥

उत्पथाशरसमर्द[1]नोद्यतं
दुर्जयं ह[2]रिवरानुभावतः ।

रामराजमवलोक्य बन्धना-
द्विभ्यतेव रुरु[3]दे तदाब्धिना ॥ ९ ॥

वा[4]हिनीः क्षितिभृ[5]तो धृ[6]तोल्वण-
स्यन्दनप्रवहणाः समागताः ।

वीक्ष्य कौतुकभरोत्तरङ्गित-
स्तारमम्बुनिधिरारवं व्यधात् ॥ १० ॥

शोष्यमाणमपि वाडवाग्निना
पीयमानमपि भूरिवारिदैः ।

एकरूपममुमणसा निधिं
विस्मितो नृपतिरैक्षत क्षणम् ॥ ११ ॥

वासरः सपदि का[7]सरासुरः
सन्ध्यया स्म शि[8]वया विदीर्यते ।

तस्य शोणितझरेण शोणिता
द्यौस्त्वचाथ तिमिरेण तस्त[9]रे ॥ १२ ॥

१ उत्पथा उन्मार्गा आशा येषां तेषाम्. दुर्मार्गासक्तानामित्यर्थः. रसस्य रागस्थ मर्दने ध्वंसने. अथ च उत्पथानां आशराणां राक्षसानां समर्दने सम्यक्पीडने उद्यतम्. २ हरेर्विष्णोर्वरस्य तद्दत्ताभीष्टस्येत्यर्थः, अथ च हरिवरस्य कपिश्रेष्ठस्य सुग्रीवस्य अनुभावतः माहात्म्यात्. ३ भावे लिट्. उत्प्रेक्षालंकारः. ४ सेना नदीश्च. ५ नृपस्य पर्वताच्च. ६ धृतानि उल्बणानि नतोन्नतानि स्यन्दनानि रथाः प्रवहणानि मनुष्यवाह्ययानविशेषाश्च याभिस्ता., अथ च धृतं उल्बणानां प्रकटानां स्यन्दनानां जलानां प्रवहणं प्रवाहो याभिस्ताः 'स्यन्दनं तु स्रुतौ नीरे तिनिशे ना रथेऽस्त्रियाम्' इति मेदिनी. ७ महिषासुरः. ८ पार्वत्या. ९ 'स्तॄ आच्छादने' इत्यस्मात् कर्मणि लिट्. व्यस्तरूपकम्.

त्रासितो भृशमिनैस्य[1] किङ्करै[2]-
　रन्धकारनिकरो मलिम्लुचः[3] ।
वारुणी[4]धृतरुचीन् निरीक्ष्य तान्
　निर्ययौ निलयनस्थलान्निजात् ॥ १३ ॥

अर्ण[5]सामधिपतिर्विहायसः
　स्वर्णपिण्डमहिमांशुमण्डलम् ।
अग्रहीदथ ततो वितीर्णवान्
　मौक्तिकप्रकरमृक्षसञ्चयम् ॥ १४ ॥

वह्निभूवलयचञ्चलेक्षणा-
　वक्त्रवारिजसहस्रदर्शनात् ।
भीतभीत इव शीतदीधिति-
　र्मन्दमन्दमुदगादगान्तरात् ॥ १५ ॥

पूर्वपर्वतनितम्बसम्भव-
　द्दावपावकशिखासखाकृतिः ।
उद्ययावुडुपतिर्नभस्तलं
　भिद्यमानघनधूमधूमलम् ॥ १६ ॥

अन्धकारनिकुरुम्बचुम्बिता-
　स्तारकाः प्रणयिनीरिसाहुपः ।
शर्वरीपरिवृढस्य तत्क्षणं
　सर्वमङ्गमभवद्रुषारुणम् ॥ १७ ॥

उच्चलद्भुजतरङ्गमुच्चकै-
　रब्धिनाट्टहसितानि तेनिरे ।

१ नृपस्य सूर्यस्य च. २ भृत्यैः, अथच किमिति वितर्कैः करैः किरणैः. ३ चोरः. ४ वारुणी मद्य प्रतीची च, तस्यां धृतरतीन्. एतेन मदपारवश्यात् किङ्कराणां दस्युनिष्क्रमणानभिज्ञता सूचिता. ५ रूपकानुप्राणिता परिवृत्तिः. ६ असोढवतः. उत्प्रेक्षालङ्कारः.

[1]पुत्रसङ्गमसमुन्मदिष्णुना
  [2]मित्रमस्तमितमप्यशोचता ॥ १८ ॥
[3]ओषधीश्वरसमागमे महां-
  स्तोष एष ननु युज्यतेतराम् ।
सन्ततोच्चलित[4]वातवैकृत-
  व्याकुलस्य पयसामधीशितुः ॥ १९ ॥
अस्तमीयुषि गभस्तिमालिन-
  [5]स्तुल्यनाम्नि जननीकनीयसि ।
[6]सोदरं स्वमिव सादरं नृपः
  शीतरोचिषमवैक्षतो[7]दितम् ॥ २० ॥
कैरवप्रणयिनः [8]कलङ्किनः
  [9]पाण्डुमेदुरकरावमर्शनात् ।
मीलिताक्षिकमला जुगुप्सया
  सञ्चुकोच सहसेव पद्मिनी ॥ २१ ॥
नाथरत्नमधिगत्य निर्भर-
  प्रीतिबन्धुरवसुन्धरास्मितैः ।
उज्ज्वलीकृतमिवाबभौ नभो
  ज्योत्स्नया झलझलायमानया ॥ २२ ॥
बिभ्रतः [10]कुवलयैकमित्रतां
  सत्[11]कलापटलपुष्कलात्मनः ।

१ पुत्रश्चन्द्रः. २ सूर्यं सुहृदं च. ३ ओषधीश्वरस्य चन्द्रस्य भिषजश्च समागमे. ४ वातो वायू रोगविशेषश्च. ५ मार्तण्डनाम्नीत्यर्थः. ६ आश्लेषर्क्षजरामराजम्. ७ आविर्भूतं राज्यप्राप्तिलक्षणोदयभाजं च. ८ लाञ्छनवतः पापवतश्च. ९ पाण्डुभिर्धवलैर्मेदुरैश्च करैः किरणैः, अथच पाण्डुना रोगविशेषेण मेदुरेण करेण हस्तेन च अवमर्शनात् स्पर्शात्. १० कुवलय भूमण्डलं उत्पलं च. ११ कला षोडशांशः शिल्पादिश्च. सापह्नवोत्प्रेक्षा.

लग्नमस्य जलराशिपोषणं
　　दूषणं वपुषि लाञ्छनच्छलात् ॥ २३ ॥
सौधतल्पजगवाक्षवर्त्मना
　　कौमुदी निभृतमन्तरागता ।
कामुकीव पतिता पदद्वये
　　[1]काश्यपीकुसुमसायकस्य सा ॥ २४ ॥
अध्वयानजनितश्रमापहं
　　गन्धवाहमपि चन्द्रिकोद्गमम् ।
सेवितुं चिरमधीश्वरं भुवो
　　नान्वमंस्त हरिसेवनत्वरा ॥ २५ ॥
सान्द्रचन्द्रकरचर्चितोदके
　　मुग्धतां दधति [2]दौग्धसैन्धवीम् ।
सागरेऽथ भगवन्तमाप्लुतं
　　सादरं नरवरोऽन्वसेवत ॥ २६ ॥
[3]अन्धकारिपदवाच्यतां दधत्
　　काल एष खलु कालकालवत् ।
सेव्यतामगमदुर्वरापतेः
　　शेखरीभवदनुष्णदीधितिः ॥ २७ ॥
चन्द्रिकापलितपाण्डरीभव-
　　न्नष्टशिष्टतिमिरावलीकचा ।
वन्द्यते स्म वसुधावलद्विषा
　　सा [4]क्षयोन्मुखवयाः [5]पितृप्रसूः ॥ २८ ॥

---

१. भूमन्मथस्य. २ दुग्धसिन्धुसंबन्धिनीम्. सिन्ध्वन्तत्वादुभयपदवृद्धिः. ३ अन्धकारवान् अन्धकासुरवैरी चेत्येतदर्थकेन अन्धकारिपदेन वाच्योऽभिधेयः, तस्य भावस्तत्ता, ताम्. उपमालंकारः. ४ क्षयोन्मुखानि गृहोन्मुखानि नीडगमनसंनद्धानीत्यर्थः, वयांसि पक्षिणः यस्यां सा, अथ च क्षयोन्मुखं नाशोन्मुखम्, परिणतामिति यावत्. वयो यस्याः सा. 'वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी. ५ सन्ध्या पितामही च.

सेविता नृभिरसौ निषेव्य तं
 सन्नतामरसमस्तका मदम् ।
कुर्वती कुमुदसंहतेर्हरिं
 सन्नतामरसमस्तकामदम् ॥ २९ ॥

पार्वतीमथ पयोधितीरगां
 पार्वणेन्दुवदनोऽभिवन्द्य ताम् ।
पार्थिवः प्रमुदितः कृताशनः
 प्राविशद्रथगतः पुरोदरम् ॥ ३० ॥

आगतेन भगिनीसुतागृहं
 स्वागताय सविशेषमर्जितम् ।
माधवाभिगमनप्रतीक्षिणा
 मानवाधिपतिना विशश्रमे ॥ ३१ ॥

सेनया विजयमानया वृतो
 मोहने गरुडवाहने हरिः ।
वेगतः पुरमथागतः पुरो
 राजपूरुषसमाजपूजितः ॥ ३२ ॥

अञ्जनाभमसितल्लजं दधत्
 कञ्जनाभपुरतस्ततश्चरन् ।
अञ्जसायमविशत्तदालयं
 कञ्जसायकसमः क्षमापतिः ॥ ३३ ॥

इन्दिरापतिमथाभिवन्द्य तं
 मन्दिरान्तरगतं महीपतिः ।

---

१ नृभिः, संनतानाममराणां समस्तान् कामान् ददातीति तथाभूतं तं हरिं निषेव्य, सन्नानि अवसन्नानि तामरसानां मस्तकानि अग्राणि यस्यां सा तथोक्ता, कुमुदसंहतेर्मदं हर्षं कुर्वती असौ संध्या सेविता. पादावृत्तियमकं शब्दालङ्कारः. २ वञ्चिमहाराज्ञीगृहम्. ३ श्यामम्. ४ मन्मथतुल्यः.

पूरितोत्सवविधिः कृतार्थधीः
सूरितोपकृदगात् स्वमालयम् ॥ ३४ ॥

तत्र नक्तमपि वृत्रहा भुवः
क्लान्तिभागपि तथाविधश्रमात् ।
कृत्यशेषमविधाय नाभजत्
तल्पमल्पितबृहस्पतिर्धिया ॥ ३५ ॥

तावदेष मतिमानजागरीत्
सावधानमथ लेखनीमखः ।
यावदस्य करणीयमाह्निकं
नावशिष्टमभवन्मनागपि ॥ ३६ ॥

सन्ततं मनसि सन्तमेव तं
चिन्तयन्नथ हरिं स्वदैवतम् ।
शिश्रिये शयनमाश्रयः सतां
श्रीविशाखविपुलावलाहितः ॥ ३७ ॥

जाग्रतेव मनसा गदाग्रजं
स्वप्नगप्यवनिपोऽनुसंदधत् ।
ब्राह्म एव तु मुहूर्त उत्थित-
स्त्यक्ततन्द्रमुदयुङ्क्त कर्मसु ॥ ३८ ॥

प्राक्तनक्षितिधवैः प्रजावने
सङ्कटो भृशममानि यः श्रमः ।
अस्य नन्वनलसस्य भूपतेः
शीलतोऽजनि विनोद एव सः ॥ ३९ ॥

प्राज्यधैर्यनिलयोऽथवा नृपो
राज्यभारजमवर्ज्यमात्मनः ।

१ दिनचरितलेखनादिकृत्यम्. २ भूमीन्द्रः ३ निद्रालुः.

आवृणोच्छ्रममगाधया धिया
वारिधिस्तलभुवेव वाडवम् ॥ ४० ॥

विश्वविष्टपनियन्तरि स्थिरं
विश्वसन्नयमविश्रमं श्रमम् ।
राज्यरक्षणकृते विचक्षणो
राजराडकृत कीर्तिपूर्तिभाक् ॥ ४१ ॥

भूभरं न परमेष शीभर
श्रीभरो भुजगराडिवाभरत् ।
आत्मना त्रिभुवनैकनायकं
पद्मनाभमपि तत्परायणः ॥ ४२ ॥

जीवनार्थिजनमन्दराचल-
क्षोभितात् क्षितिपतेः क्षमाम्बुधेः ।
नित्यमुद्गतमभूद्दयामृतं
न त्वमर्षगरळं कदाचन ॥ ४३ ॥

स्थैर्यवानयमयं चलाशयो
बुद्धिमानयमयं कुधीरिति ।
कस्यचित् प्रथमदृष्टिमात्रत-
स्तत्त्वमेष निरचेष्ट धृष्टधीः ॥ ४४ ॥

हृद्यया विमलशीलसंपदा
विद्यया च विनयानवद्यया ।
अद्य यावदिह मण्डले पुमा-
नुद्ययावुपरि नास्य कश्चन ॥ ४५ ॥

नित्यमैप्यत नयज्ञसेवनं
भूमिभृन्मदविभेदिनामुना ।

१ क्षमासमुद्रस्य लोकनाशकगरलानुत्पादकत्वं प्रसिद्धसमुद्राद्विशेषः. २ राज्ञां पर्वतानां च मदविभेदिना.

यत्तदद्भुतमपव्यपायदो-
स्संपदा रिपुबलप्रमाथिना ॥ ४६ ॥
अञ्चितद्युतिरपेतदूषणो
वह्निभूरमणवंशसंभवः ।
कोऽप्यनर्घमणिरेष रामराट्
कोविदैः शिरसि शेखरीकृतः ॥ ४७ ॥

राजयोगनियतेन राजसी
वृत्तिरिद्धतरसत्त्वसंपदा ।
वीततामसविकारचेतसा
लोकसङ्ग्रहकृतेऽमुना श्रिता ॥ ४८ ॥

विश्वसन्नयमनश्वरे स्थिरं
धर्म एव कुलदैवते निजे ।
नोदचाल्यत महामतिस्ततः
कामतो न भयतो न लोभतः ॥ ४९ ॥

अग्रजे स्वकुलशेखरायिते
भूभृति प्रतिनवोत्थितादरः ।
ईयुषि स्वरिदमीयमुच्चकै-
राब्दिकोत्सवमजूजुषन्नृपः ॥ ५० ॥

वैदिकानपि पुरोहितानसौ
भूसुरानभिजनेन भासुरान् ।
बान्धवोत्करमपि न्यमन्त्रय-
द्राजवंश्यजनमप्यशेषतः ॥ ५१ ॥

१ अपगतव्यपाया, अथच पवेर्वज्रस्यापायोऽपगमो नास्ति यस्या सा दोःसम्पद्यस्य. २ रिपूणां बलानि प्रमथितुं शीलमस्येति तथा, अथच रिपोर्बलस्य बलासुरस्य प्रमाथिना. इन्द्रेणेत्यर्थः. इन्द्रेण यज्ञसेवनं नाभिलषितमिति विरोधः. नयज्ञानां नीतिविदां सेवनं अभिलषितमिति परिहारः. ३ वंशः कुलं वेणुश्च. ४ धर्मात्. ५ स्वरित्यव्ययं स्वर्गवाचि. ६ आब्दिकश्राद्धम्.

आदरातिशयमेदुराशयः
सोदरावनिपतौ तदाब्दिकम् ।
आदिशन्नृपतरात्ममान्त्रिण
साधु साधयितुमैधितोत्सवम् ॥ ९२ ॥

पारदेशिकजनाः परश्शता
भूरिकौतुकतरङ्गिताशयाः ।
आगता नगरमाहिताग्नयः
प्रागभूतविभवाभिशोभितम् ॥ ९३ ॥

भूयिष्ठभूसुरकदम्बनिवासयोग्य-
शालाकलापकलनोचितसाधनानाम् ।
सम्पादनाय सचिवेन्द्रनियुज्यमान-
नानाधिकारिभिरतन्द्रमतानि यत्नः ॥ ९४ ॥

निषादिजननिर्दयाङ्कुशनिकृन्तनासङ्कट-
स्फुटत्कटतटक्षरत्क्षतजबिन्दुसिन्दूरितैः ।
अकाण्डचलदञ्जनाचलनिभैरिभैर्भूरुह-
प्रकाण्डकुलकर्षिभिः शुशुभिरे प्रतोळीपथाः ॥ ९५ ॥

अल्पैरेव दिनैरकल्पि पटुभिः शिल्पाधिकारोद्धुरै-
स्तक्षत्वष्टगरिष्ठदारुघटितस्तम्भालिसम्भावितम् ।
शालानां पटलं विशालमभितः केरच्छदैश्छादितं
वेणुस्तम्बकदम्बकोपरिपरिस्तीर्णैरुदीर्णप्रभम् ॥ ९६ ॥

केऽपि श्रीपद्मनाभार्चनधृतकुतुकाः केचन श्रीविशाख-
क्षोणीशक्षेक्षणोत्काः कतिचन दधतः स्फायमानां धनायाम् ।
नानादिग्भ्योऽपि लोकाः कतिचिदतितरामेधमानाशनायाः
स्यानन्दूरं सुदूरादपि पुरवरमासेदुरानन्दसान्द्राः ॥ ९७ ॥

१ शालानिर्माणोपयोगिदारुविशेषनेतृभिरित्यर्थः. २ त्वष्टेति तनूकृतेत्यर्थः. ३ धनलोभम्. ४ वर्धमानबुभुक्षाः.

अश्लेपर्क्षजरामवर्मवसुधाजानेर्जनानन्दनो
मासोऽभून्महनीयमङ्गळमहारम्भप्रियंभावुकः ।
यत्र प्रत्यहमन्नराशिरभितः कैलासशैलाकृतिः
पुञ्जीभूतधरापुरन्दरयशःपूरश्रियं शिश्रिये ॥ ५८ ॥

मृष्टान्नैरपि दक्षिणाभिरसकृत् सन्तर्पयन् भूसुरान्
ज्येष्ठभ्रातुरभूतपूर्वविभवं निर्वर्त्य मासोत्सवम् ।
भक्त्या श्रीपरसीरुहाक्षचरणाम्भोजं भजन्नन्वहं
श्रीमानात्मवशामशादिह विशाखोर्वीमहेन्द्रो महीम् ॥ ५९ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
नेतारं निजसोदराब्धिकविविव्यग्रं गिरानुद्रवन्
सर्गस्तस्य कृतौ विशाखविजये निष्ठामगादष्टमः ॥ ६० ॥

इति श्रीविशाखविजयेऽष्टमः सर्गः.

## नवमः सर्गः.

श्रीमान् वञ्चिक्ष्मावलारिर्विशाखः
स्वामात्येन स्वामिभक्तेन सार्धम् ।
क्षेमाधाने स्वप्रजानामतानी-
द्धीमान् यत्नं पद्मनाभार्पितात्मा ॥ १ ॥

आसीदेतस्योदये रामराज-
स्यानन्दाब्धिः प्राणिनामुत्तरङ्गः ।
कीर्त्तिज्योत्स्ना पूर्तिमत्यभ्यशोभि-
ष्टैधिष्टोच्चैः सूरिचाकोरहर्षः ॥ २ ॥

१ राजा नृपश्चन्द्रश्च. २ चाकोरं चकोरसमूहः.

गोत्रापत्यासक्तचित्तः समस्तो
भृत्यस्तोमो भीमवद्रामवच्च ।
सत्कृत्त्यासङ्गाञ्चितो वञ्चिराज्ये
रक्षोपायव्यापृतोऽभूदभीक्ष्णम् ॥ ३ ॥

वैशाखेऽथ क्ष्माबिडौजा विशाखः
श्रीमान् जन्मर्क्षोत्सवं वार्षिकं स्वम् ।
निर्वर्त्याभात् पद्मनाभैकभक्तो
वित्तैर्भक्तैस्तर्पिताशेषलोकः ॥ ४ ॥

तस्मादृश्या श्रीविशाखस्य नीत्या
यासौ लक्ष्मीः केरलैकाश्रयाभूत् ।
सौहार्दात्तामभ्यनन्दन्नमन्दं
दूरस्थास्ते भारतस्यावितारः ॥ ५ ॥

लक्ष्मीराज्ञ्याश्चारुचारित्रकीर्ति
स्फीतीभूतां मातुलानुग्रहेण ।
श्रुत्वा प्रीता भारताधीश्वरी सा
कामप्यस्यै प्रैषयत् प्रेममुद्राम् ॥ ६ ॥

साध्व्यै राज्ञ्यै पूर्वमाश्लेषजेन
क्षोणीभर्त्रापादितं खेदमुच्चैः ।

---

१ गोत्रापतौ राज्ञि गोत्रापत्ये पार्वत्यां सीतायां च आसक्तचित्तः. २ शिववत्. ३ सत्सु शोभनेषु कृत्येषु कर्मसु, सत्याः शोभनायाः कृत्तेर्गजचर्मणो वस्त्रीकृतस्य, सत्याः कृतेः श्रीरामायणात्मनश्च, आसङ्गेन तात्पर्येण परिधानेन प्रतिपाद्यत्वलक्षणसंबन्धेन च अञ्चितः पूजितः. ४ रक्षायां प्रजारक्षणे य उपायस्तत्र, रक्षाया भस्मन उपाय उपगतौ, रक्षसामपाये नाशने च व्यापृतः. ५ अग्नेः. ६ दैववशात्कंचित्कालं प्राप्तप्रियवियोगा. ७ वञ्चिमहाराज्ञी लक्ष्मीदेवी राज्यलक्ष्मीश्च. ८ केरलः(एतत्काव्यकर्ता) केरलवर्मदेव एकाश्रयो भर्तृत्वेन मुख्यसेव्यो यस्याः सा. भर्त्रन्तरवरणविमुखतया वियोगकालेऽपि तदेकमानसेत्यर्थः. एतेन पातिव्रत्यमुक्तम्, अथच केरला जनपदविशेष एकाश्रयो मुख्याधारो यस्याः सा. ९ रक्षितारः हूणेश्वरा इत्यर्थः. १० विक्टोरियाचक्रवर्तिनी.

गाढस्थेम्ना सोढवत्यै चिराय
श्रेयो युक्तं चक्रवर्तिन्यदात् सा ॥ ७ ॥
पातिव्रत्यं केरळीयाङ्गनानां
नान्वीवेति ख्यातिरस्तंगताभूत् ।
यद्दृष्टान्तेनावनीनायिकायै
स्थाने तस्यै सापि कोटीरमुद्रा ॥ ८ ॥
चक्रेश्वर्या कल्पितो वञ्चिराज्याः
सम्मानोऽयं सम्मतोऽभूत् [1]समेषां ।
सौजन्याब्धेर्मातुलस्यातुलस्य
स्नेहस्यैनं सापि मेने विवर्तम् ॥ ९ ॥
पूर्वं लक्ष्मीपार्वतीनामिके ये
राजेश्वर्यौ [2]राज्यभारं दधाते ।
नावाप्येवं नाम ताभ्यामपीह
श्रीमत्सीमाधीशसम्मानमुद्रा ॥ १० ॥
[3]मद्रावीशे [4]राजकीयान्ववाये
तस्मिन् राज्ञः प्रेष्ठमित्रे प्रयाते ।
[5]अन्यो मान्यस्तत्पदेऽकल्पि योऽसौ
कालेनाल्पेनाभवन्नामशेषः ॥ ११ ॥
नूत्नस्तावन्मद्रभर्ता सुशीलः
प्रज्ञावत्सु प्रेमवान् भूमिभर्त्रे ।
प्रीत्या पत्रं स्वागमज्ञापनार्थं
प्राचामाचारानुरोधादहैषीत् ॥ १२ ॥
यस्मिन्नह्नि श्रीविशाखाय दत्तं
पत्रं स्वामात्येन नूत्नस्य [6]भर्तुः ।

१ सर्वेषाम्. २ वञ्चिराज्यभारम्. ३ The Duke of Buckingham. ४ राजवंश्ये. ५ Mr. Adam. ६ Mr. Graht Duff. ७ मद्रेश्वरस्य.

लक्ष्मीराज्ञ्या प्रापि चक्रेश्वरीत-
स्तस्मिन्नेव श्रीमती सापि मुद्रा ॥ १३ ॥

मुक्तायुक्तस्फारहीरेन्द्रनीले
मुग्धापाङ्ग्यामुच्यमानेऽधिकण्ठम् ।
मुद्रारत्ने मुक्तगम्भीरघोषै-
र्मुक्ता तावन्मौनमुद्रा खधूमैः ॥ १४ ॥

सौधस्याधः साधु सा व्यूह्यमाना
सेनानीभिः सानका सैनिकाळी ।
लक्ष्मीराज्ञीमाज्ञया श्रीविशाख-
क्षोणीजानेराहिताचारमाञ्चत् ॥ १५ ॥

अस्मत्स्वामी श्रीमहाराड्विशाख-
श्चक्रेश्वर्याः प्राप्य तामृक्षमुद्राम् ।
आधिन्विष्वत्येव नः शीघ्रमेवं
दैवं विश्वस्येह न प्रार्थितं कैः ॥ १६ ॥

यस्मिन्मासे वासरे सौधवर्ये
वर्षेऽतीते राज्यलक्ष्मीरवाप्ता ।
वञ्चिक्ष्माभृद्वंशरत्नेन चित्रं
लक्ष्म्या तस्मिन्नाप्तमाकल्परत्नम् ॥ १७ ॥

स्वस्त्रीयायै स्वस्य सम्मानदात्र्या
राजेश्वर्या रम्यमालख्यवर्यम् ।
सम्यग्दर्शी सप्रमोदं प्रदाय
स्फीतामाधान्मातुलः प्रीतिमस्याः ॥ १८ ॥

विश्रान्त्यर्थं श्रीविशाखक्षितीशः
कोळम्बाख्यं तत् पुरं प्राप्य भूयः ।

---

१ विक्टोरियाचक्रवर्तिन्याः. २ महानाळिकैः. ३ अपूजयत्. मुद्रारत्नधारणसमय इति भावः. ४ मासे वासरे सौधवर्ये च. ५ स्वस्रीयायाः.

तत्रानैषीत् कानिचिद्वासराणि
श्राम्यन्नेव श्रेयसे मण्डलस्य ॥ १९ ॥
राजेश्वर्या लम्भिताभ्यर्हणाया
राज्ञ्या लक्ष्म्या निर्भरो हर्षसिन्धुः ।
एकस्यैव ज्यायसः सोदरस्य
ध्वंसेनासीत् [1]कुम्भजेनाशु पीतः ॥ २० ॥
चित्रा दैवी कल्पनेयं यद[2]स्या
माता तावत् पुत्रिणीनां धुरीणा ।
पुत्रीरत्नद्वन्द्वमन्य[3]त्र द[4]त्वा
कालेनासीदेके[5]शेषस्त्र्यपत्या ॥ २१ ॥
शावाशौचे तावदस्मिन् निवृत्ते
प्रत्यायातः पत्तनं पार्थिवेन्द्रः ।
दिष्टान्तेन भ्रातुरत्यन्तदूने
स्वर्स्रीये स्वे सौहृदादन्वशोचत् ॥ २२ ॥
वासाय श्रीवञ्चिभूवासवस्य
प्रासादस्य प्रक्रियारम्भि यस्य ।
संपूर्णोऽभूत्तावदन्यादृशश्रीः
सोऽयं नाम्नानन्तपूर्वो विलासः ॥ २३ ॥
सर्पस्येव श्वभ्रमाखुप्रक्लृप्तं
पूर्वक्ष्माभृन्निर्मितं हर्म्यमेव ।
संश्रित्यासीनस्य [6]सर्पर्क्षजस्य
भ्रातुर्नीतिं नाग्रहीच्छ्रीविशाखः ॥ २४ ॥
तुङ्गत्वेन स्थैर्यसारेण चान्त-
वैपुल्येन श्रीविशाखैकयोग्यम् ।

---

१ अगस्त्येन. २ लक्ष्मीदेव्याः. ३ वञ्चिराजकुटुम्बे. ४ अपत्यत्वेनार्पयित्वा.
५ एकं शेषं अवशिष्टं त्र्यपत्यं यस्याः सा. ६ आश्लेषनक्षत्रजातस्य रामवर्मराजस्य.

नेत्रानन्दाधायिनं सौधराजं
लोकाः सर्वे व्यस्मयन्तावलोक्य ॥ २५ ॥

प्राणैषीद्यं[1] श्रीविशाखः कवीनां
प्रेष्ठो निर्दुष्टार्थमक्लिष्टमेव ।
वर्णै[2]र्भङ्ग्या[3] वेशितैश्चित्र[4]बन्धः
सौधः सोऽभात् सर्वतोभद्र[5]रूपः ॥ २६ ॥

प्रासादं तं वैजयन्तं जयन्तं
स्वस्थै[6]रिष्टैः कुम्भि[7]नीजम्भभेदी ।
दृप्तक्ष्माभृत्पक्षहर्ता[8] बुधाना[9]-
मध्यक्षोऽयं सन्मुहूर्तेऽध्यरुक्षत् ॥ २७ ॥

भक्तिप्राप्यो लक्ष्यलक्ष्मी[10]विलासः
पुण्यो धृत्या[11] पूरुषेषूत्त[12]मस्य ।
प्रासादोऽसौ प्राप्तवैकुण्ठसाम्यः
कस्यात्मानं नाकृतानन्दसान्द्रम् ॥ २८ ॥

सर्वज्ञत्वं[13] राजचूडामणित्वं[14]
बिभ्रद् देवो[15] यत्र सत्या[16]दृतात्मा ।
संविष्टोऽभूद्द्रव्य[17]रूपेण तेन
प्रासादेनालासि कैलासभासा ॥ २९ ॥

१ अग्रगामी. २ शुक्लनीलादिभिरक्षरैश्च. ३ चमत्कारिण्या रीत्या. ४ चित्रा नानारूपा बन्धाः भित्त्यादिबन्धनानि यस्मिन् सः, चित्रकाव्यबन्धश्च. ५ 'सर्वतोभद्र इत्युक्तः काव्यचित्रे गृहान्तरे' इति मेदिनी. ६ आधिव्याधिरहितैः स्वर्गस्थैश्च. ७ कुम्भिन्या भूमेर्जम्भभेदी इन्द्रः. ८ शत्रुनृपसहायनाशकः पर्वतपतत्रच्छेदकश्च. ९ विदुषां देवानां च. १० महाराजान्तःपुरनामेदम्. अर्थान्तरं स्पष्टम्. ११ धरणेन, अवस्थानेन वा. १२ राज्ञो विष्णोश्च. १३ सकलज्ञत्वं सर्वज्ञाख्यत्वं च. १४ नृपश्रेष्ठत्वं चन्द्रशेखरत्वं च. १५ विशाखराजः शिवश्च. १६ सत्येन सत्या पार्वत्या चादृतात्मा. १७ दर्शनीयरूपेण रजतरूपेण च.

अस्य श्रैष्ठ्येष्वप्यसाधारणेषु
श्रीवञ्चीशो बह्वमंस्तैतदेव ।
सौधस्योपर्युत्तरालिन्दतो य-
न्नित्यं दृश्यः पद्मनाभालयोऽग्रे ॥ ३० ॥

नानावर्णप्रस्तरस्तोमचित्र-
ज्योतिष्पूरोद्गारकिर्मीरभासि ।
पुण्येनैतत्कुट्टिमे न्यस्तपादा
जाताः सर्वे हन्त कल्माषपादाः ॥ ३१ ॥

भूपालेन्द्रागारपार्श्वद्वयोद्य-
त्सोपानाळीमेळितस्तम्भमूर्ध्नि ।
ये पाञ्चालीविभ्रमं दृष्टवन्तो
नापार्थास्ते प्राणिनां नेत्रसार्थाः ॥ ३२ ॥

वाताधूतस्फाटिकाण्डप्रदीप-
प्रेङ्खोलानां किङ्किणीनां निनादः ।
उत्प्रैक्ष्येतैतत्सौधराट्चन्द्रशाला-
लीलालोलश्रीतुलाकोटिशिञ्जा ॥ ३३ ॥

प्रासादस्य स्तावकः श्लोकराशिः
प्रत्यग्रस्य प्रीतिसान्द्रैः कवीन्द्रैः ।
पृथ्वीनाथायोपहारीकृतोऽभूत्
प्राज्ञोऽसौ तांश्चाभ्यनन्दद्यथार्हम् ॥ ३४ ॥

हर्म्यस्तावी श्रीविशाखस्य खट्वा-
मारूढोऽभूल्लेखनाधारभूताम् ।

१ सन्निवेशसौष्ठवादिकृतेषु श्रेष्ठत्वेषु. २ अविच्छिन्नभगवत्पद्मनाभालयदर्शनसौकर्योपपादकत्वमेवेत्यर्थः. ३ 'चित्रकिर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः. ४ ऐक्ष्वाकस्य कस्यचिद्राज्ञः कल्माषपाद इति संज्ञा, अथच कल्माषाश्चित्रवर्णाः पादा येषां ते. तद्गुणालङ्कारः. ५ पुत्रिकाविलासं द्रौपदीविलासं च. ६ अपार्था अपगतप्रयोजना न किन्तु सफला एवेत्यर्थः, अथच अपार्थाः पृथापुत्रभिन्ना न किन्तु पार्था एवेत्यर्थः. ७ एतत्सौधोत्तमशिरोगृहसञ्चारक्रीडालम्पटलक्ष्मीनूपुरध्वनिः.

पद्यव्रातो यत्[1]प्रणीतः परं ते
खट्वारूढा[2] नाभवँल्लब्धवर्णाः[3] ॥ ३५ ॥

भूमिदेवान् भोजयित्वा विशाखः
श्रीमानत्र श्रावणीमङ्गळाहे[4] ।
वासोदानैर्भागिनेयान् वदान्यो
बन्धूनन्यानाश्रितानप्यधिन्वीत् ॥ ३६ ॥

आकिञ्चन्यग्रस्तमप्यत्र काले[5]
नृणां बृन्दं नूत्नवासो वसानम् ।
मृष्टं भुक्त्वा भक्तमिष्टैरनैषीद्
वेळां दोळाकेळिमुख्यैर्विनोदैः ॥ ३७ ॥

बाहूबाहव्याहवैर्[6]बद्धखेला
बालास्तावल्लालसल्लीलचेलाः ।
पर्यष्कार्षुस्तत्रतत्र प्रतोळीः
केळीभेदैः कन्दुकास्फालनाद्यैः ॥ ३८ ॥

दोळारूढाः कैशिकैर्लम्बमानैः
काळाम्भोदश्यामळैः कोमळाङ्ग्यः ।
तारं गायन्त्योऽभवन् कामुकानां
सारङ्गाक्ष्यो मोदभूमोदयाय ॥ ३९ ॥

मञ्जीराणां शिञ्जितैः कङ्कणानां
कर्णानन्दं कण्ठनादैर्ददानाः ।
पादाघातैः पाणिताळैश्च नार्यः
पर्य[7]क्रीडन्तोच्चलच्छ्रोणिबिम्बाः ॥ ४० ॥

१ यैर्लब्धवर्णैः प्रणीतः. २ जाल्माः, 'खट्वा क्षेपे' इति समासः. यैः कृताः श्लोका महाराजेन स्वीकृत्य लेखनाधारफलके निहितास्त एव कवयः समीक्ष्यकारिण इत्यभिमता अभवन्नित्यर्थः. ३ विद्वांसः. ४ श्रवणनक्षत्रयुक्ततिथियुक्तमङ्गलदिने. ५ पूर्वोक्तोत्सवदिने. ६ बाहुना बाहुना प्रहृत्येदं युद्धं प्रवृत्तमिति तथा. ७ 'क्रीडोऽनुसंपरिभ्यश्च' इति तङ्.

बन्धूनामन्त्यात्मनः श्रीविशाखः
सर्वानव्याजानुकम्पार्द्रचित्तः ।
प्राज्यैर्भोज्यैः प्रीणयित्वा नवीनं
सौधं तेभ्यः सादरं सोऽददर्शत् ॥ ४१ ॥

पायूषादप्यन्नमास्वाद्यमतद्
रम्यं हर्म्यं वैजयन्तादपीदम् ।
भूपः शक्रादप्ययं भूरिभूमा
तैलारण्येशोऽकरोच्छ्लोकमेवम् ॥ ४२ ॥

निर्वृत्तेऽथ श्रावणे नावरात्रः
प्रक्रान्तोऽभूदुत्सवो राजधान्याम् ।
प्रावर्तिष्ट प्रत्यहं कल्पकाले
वाग्देवत्या यत्र वर्या सपर्या ॥ ४३ ॥

देवः शक्त्या दीप्यमानो नितान्तं
सौन्दर्येण श्रीकुमारो विशाखः ।
सुब्रह्मण्यो जिह्मगद्रोहिबाहुः
पौरैर्भक्त्या तावदाराधितोऽभूत् ॥ ४४ ॥

श्रेणीबद्धैर्जम्भलैर्जृम्भिताभैः
पक्कैः पूगैः संभृतस्तम्भशोभा ।
देवीपूजासद्मनः पूर्वभागे
शाला मालालङ्कृताभाद् विशाला ॥ ४५ ॥

तत्रोर्वश्या स्पर्धमानासु वेश्या-
स्वाविष्कुर्वाणासु लास्यप्रभेदान् ।

१ 'राजबन्धुष्वेकः प्रभुरयम्. २ नवानां रात्रीणां समाहारो न[illegible], तस्यायमिति तथा. ३ सरस्वतीदेवताका. ४ सामर्थ्येन आयुधविशेषेण च. ५ मन्मथः कुमारनामधेयश्च. ६ राजा विशाखसंज्ञश्च. ७ ब्रह्मभ्यो हितः ब्रह्मणि तपसि साधुर्वा ब्रह्मण्यः. शोभनो ब्रह्मण्यः सुब्रह्मण्यः स्कन्दश्च. ८ भोगिभोगदीर्घभुज इत्यर्थः. बवयोरभेदान्मयूरवाहनश्च. श्लेषः शब्दशक्तिमूलध्वनिर्वा. ९ जम्बीरैः. १० क्रमुकगुच्छैः.

[1]धिक्ताधिक्तामित्यरौन्मर्दलौघः
श्लाघानामां निर्मिमाणोऽतिमात्रम् ॥ ४६ ॥
[2]बिब्बोकेनानुत्तमेनात्र गोष्ठी
बिम्बोष्ठीनामात्तनृत्तार्भटीनाम् ।
केषां नैषा वर्धयामास नृणां
रङ्गस्थानामङ्गजन्मानमन्तः ॥ ४७ ॥
सायं सङ्घः सङ्गतः पण्डितानां
शास्त्राभ्यासक्लेशमाकल्यमी[3]प्सुः ।
श्रद्धोपेते शृण्वति श्रीविशाखे
बद्धोत्साहं [4]जल्पकेलिं वितेने ॥ ४८ ॥
सुब्रह्मण्यो दीक्षितोऽस्या[5]नुजन्मा
सूरी रामस्वामिनौ रामचन्द्रः ।
अप्याचार्यो राघवः श्रीनिवासो
गोष्ठ्यामस्यामापुराध्यक्ष्यमेते ॥ ४९ ॥
[6]वक्षोजन्मन्यत्र वाग्देवतायाः
साहित्याख्ये सूरिभिर्नुद्यमाने ।
संसद्यन्यत्राभ्यमृद्नन्नमन्दं
सङ्गीताख्यं गायका राजकीयाः ॥ ५० ॥
आरब्धायामत्र सङ्गीतभङ्ग्या-
मासीदेकः [7]पारमेश्वर्यधुर्यः ।
यस्योदञ्चत्[8]काकली कण्ठनाळी
[9]दृष्टान्तत्वेने[10]र्यते हृद्यतायाम् ॥ ५१ ॥

१ इदं मर्दलशब्दानुकरणम्. तस्य 'डाचि बहुलम्' इति बहुलवचनाद् द्वित्वम्. तत्र तां बुद्धिस्थां उर्वशीं धिक् सा निन्द्येत्यर्थः. इत्यर्थपरिकल्पनयोत्प्रेक्ष्यते. २ विलासेन. ३ आप्तुमिच्छुः. ४ परमतनिराकरणपूर्वकस्वमतस्थापनं जल्पः. ५ नारायणनामा. ६ "सङ्गीतमपि साहित्यं सरस्वत्याः स्तनद्वयम् । एकमापातमधुरमन्यदालोचनामृतम् ॥" इत्यभियुक्ताः. ७ परमेश्वर इत्यर्थः. परमेश्वरनामकत्वात् गायकसभानायकत्वं च तथोक्तिः. ८ काकलीशब्दः कलवाची. ९ उपमानत्वेनेत्यर्थः. १० कथ्यते.

वीणाचुञ्चुः[1] कोटिलिङ्गेश[2]शिष्यो
    वृद्धोऽप्युत्साहोत्कटो वेङ्कटाद्रिः।
स्वीयादन्यं शिष्यवर्गान्न सेहे
    लोकश्लाघापात्रताभाजमत्र[3] ॥ ५२ ॥

यः किन्नर्यां[4] कीर्त्तिशाली महादे-
    वोऽसौ कल्यः सोऽपि कल्याणकृष्णः।
यो वीणायामग्रगण्यः प्रवीणो
    द्वावप्यत्यक्रामतामात्मतातौ ॥ ५३ ॥

स्वोपाध्यायीभूतकल्याणकृष्णः
    प्रेम्णा भूयः शिक्षितो भूक्षितैव।
शश्लाघेऽत्र श्रीविशाखेष्टभृत्यः
    शान्तो वीणां वादयन् रामवर्मा ॥ ५४ ॥

गाढोत्साहं गायतां गायकानां
    संरम्भस्य स्पर्धया वर्धितस्य।
भूमीजानेरागमस्याग्रजन्मा
    लुण्टाको[6]ऽभूद्धन्त घण्टानिनादः ॥ ५५ ॥

तत्रागच्छद् वृत्रहा भूतधात्र्या
    नेत्रानन्दं पोषयन् प्रेक्षकाणाम्।
स्वस्त्रीयाद्यैर्बन्धुभिर्मन्त्रिमुख्यै-
    र्भृत्यैरन्वग्भाव[7]मासेव्यमानः ॥ ५६ ॥

अभ्राजन्त भ्रमरशितिभिः कैशिकैर्वेशकान्ता-
    स्तत्र त्रस्यत्तरुणहरिणस्पर्धिनेत्राः सुगात्राः।
सस्नेहं[8] स्वं हृदयमतनुस्फूर्ति[9]मद्दर्शयन्त्यो
    दीपव्याजाद्बहिरिव महीमन्मथायेद्धरागम्[10] ॥ ५७ ॥

१ वीणया प्रसिद्धः. २ कोटिलिङ्गाख्यः केरलेषु कश्चिद् ग्रामः. ३ संसदि. ४ वाद्यविशेषे. ५ परमेश्वरवेङ्कटाद्री. ६ चोरः. सरस्वतीसेवार्थं राजागमनकाले गायकागानाद्विरता इति भावः. ७ 'अन्वच्यानुलोम्ये' इति णमुल्. ८ सतैलं सप्रणयं च. ९ अनल्पस्फुरणवत् कामस्फूर्तिमच्च. १० आरुण्यं मानश्च रागः, स इद्धो यस्मिंस्तत्.

क्षोणीदेवैस्तदनु विधिवत् तत्र नीराजनायां
वाणीदेव्यै विहितबहुसङ्कीर्तनं कल्पितायाम् ।
दत्त्वा पुष्पाञ्जलिमतुलितामोदमुर्वीमरुत्वान्
नत्वा चैनां निजनिलयनं प्रत्यगात् कृत्यधीरः ॥ ५८ ॥

नवसु दिवसेष्वेवं यातेषु कोविदसंसदे
विदधदवनीनाथो विद्वान् यथायथमर्हणाम् ।
विजयदशमीसायाह्ने तं कुमारमुपासितुं
रथवरमधिष्ठाय प्रातिष्ठतैधितसौष्ठवम् ॥ ५९ ॥

पुरटघटितापीडभ्राजिष्णुचामरमञ्जरी-
स्फुरदुरुतरग्रीवापार्श्वोपलीनखलीनया ।
विरचितपरिष्कारैर्वीरैर्भटैरधिरूढया
तुरगघटयालासीन्नासीरसीमनि वाहिनी ॥ ६० ॥

तरुणतमालनीलतनुकान्तितमःपटल-
प्रकटितपद्मकप्रकरतारकराजिरुचि ।
गलचलघण्टिकाघणघणारवचारुतरं
नृपतिबलस्य हास्तिकमहास्त पुरो निभृतम् ॥ ६१ ॥

विपुलकुतूहलं जनतया नतयानुगतो
विजयविलासमेत्य विजयप्रतिमो महसा ।
विहितगुहार्चनो विशिखदारितकेरफलो
विशति पुरो विशाखनृवरः पुरमाशु पुनः ॥ ६२ ॥

आत्तानन्दमथाश्विनोत्सवमसावम्भोजनाभस्य तं
निर्वर्त्यानुपमानभूरिविभवं भूमण्डलाखण्डलः ।

---

१ सुब्रह्मण्यम्. २ पुरटं सुवर्णम्. ३ 'पद्मकं बिन्दुजालकम्' इत्यमरः. ४ 'ओहाङ् गतौ' इत्यस्माल्लुङ्. ५ सौधविशेषम्. ६ विशिखेन दारितं केरफलं दैत्यप्रतिनिधिभूतं नालिकेरफलं येन, सः. ७ 'पुरि लुङ् चास्मे' इति भूते पुराशब्दयोगे लट्.

अस्मिन्नर्पितधीरजस्रमवधानेनात्मनो निर्वहन्
सर्वं कृत्यमपूपुपत् प्रकृतिषु श्रीमानसीमां मुदम् ॥ ६३ ॥
जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
सर्गोऽयं नवमोऽगमन्नवनवोन्मीलद्रसस्तत्कृतौ
काव्ये कीर्त्तितनावरात्रविजयापूजोत्सवः पूर्णताम् ॥ ६४ ॥

इति श्रीविशाखविजये नवमः सर्गः.

---

अथ दशमः सर्गः.

श्रियमप्यवनिं घनाभगात्रः
परिगृह्णन्नरविन्दलोचनोऽयम् ।
विबुधानधिनोज्जगत्यधीशः
कलितानन्तविलासमञ्चकेळिः ॥ १ ॥
अनयन्नृपतिर्निर्मूलकाषं
कषितां नीवृति नष्टतामनीतिम् ।
उदितस्तरणिः क्षणात्तमिस्रां
यदि तक्ष्णोतितमां किमत्र चित्रम् ॥ २ ॥
अपथप्रसृतैरमुष्य नीतिः
कतिभिश्चिद्यदि नादृता ततः किम् ।
हरिदश्वरुचेरुलूकलोक-
प्रियसम्पादननैपुणी कथं स्यात् ॥ ३ ॥

१ अम्भोजनाभे. २ पोषयति स्म. ३ राज्यलक्ष्मीं भा[illegible] च. ४ भूमिं तदभिमानिदेवतां च. ५ सान्द्रकान्तिवपुः मेघकान्तिवपुश्च ६ वि[illegible]षो देवांश्च. ७ भूपतिः लोकेशश्च. ८ कलिता अनन्तविलासमञ्चे अनन्तविलासाख्यसौधस्थपर्यङ्के, अपि च अनन्ते शेष एव विलासमञ्चे लीलापर्यङ्के केळिर्येन सः. ९ 'निमूलसमूलयोः कषः' इति णमुल्. दृष्टान्तालङ्कारः.

अपि [1]राजशिखामणि[2]र्मनोभू-
मदसर्वस्वहरो महेश्वरोऽयम् ।
[3]धृतपर्वतभूविहारमोदो
न [4]भुजङ्गैरगमत् कदापि योगम् ॥ ४ ॥

महितं भुवि वञ्चिराज्यमेत-
न्महिताः श्रीकुलशेखरास्तथैते ।
[5]चरमः पुनरत्र रौक्मिणेयो
महिमानं व्यतनोदभूतपूर्वम् ॥ ५ ॥

कति भूपतयः कथावशेषा
भुवि धारानगरीं पुराध्यवात्सुः ।
स महानिह भोजराज एको
विदुषां कोटिषु गण्यतेऽधुनापि ॥ ६ ॥

'[6]मनुजरूपधरः एष देवो'
मनुनैव प्रतिपादितं यदेवम् ।
तदिदं नृपतेरहो महत्त्वं
महिषप्रायमहीक्षितां कुतः स्यात् ॥ ७ ॥

निजकृत्यविचारदुर्विधानां
विषयान्वेषणमात्रलम्पटानाम् ।
इतरक्षितिरक्षिणां कथां धिग्
धृतसाम्राज्यधुरे विशाखवीरे ॥ ८ ॥

अवितारममुं जनः सिषेवे
कवितारम्यमधूलिकाधुरीणः ।

१ नृपेन्द्रः चन्द्रचूडश्च. २ मन्मथसुन्दर इत्यर्थः. मन्मथशत्रुश्च. ३ धृतः पर्वतभूषु गिरिसानुभूमिषु विहारे सञ्चारक्रीडायाम्, अथच पर्वतभुवः पार्वत्या विहारे संभोगे मोदो येन सः. ४ विटैः सर्पैश्च. विरोधालङ्कारः. ५ एतद्दृष्टान्तेन चरमरुक्मिणीसूनोर्विशाखस्य महामहिमत्वं द्रढयति. ६ 'महती देवता ह्येषा नररूपेण तिष्ठति' इति.

सवितारमिवारविन्दवारो
भुवि तारस्वरतायमानकीर्त्तिम् ॥ ९ ॥
नियतं निजकृत्यनिष्ठमेनं
विदुषामग्रसरं विशाखराजम् ।
अधिगम्य नृपान्वयो महीया-
नयमु[1]च्छ्रायमतुच्छमच्छमार्च्छत् ॥ १० ॥
विहितं गुरुभिः पुरातनैः स्वै-
रथ [2]षाड्वर्षिकमेष लक्षदीपम् ।
महितोत्सवमाहितादरं तं
पुनरारब्धुमशादमात्यमद्धा ॥ ११ ॥
सचिवोऽपि स भर्तुराशयज्ञो
महिताभोगममुं महं विधास्यन् ।
अधिकारधुरन्धरानशेषा-
नशिषत् [3]कर्मसु सर्वतोऽवधातुम् ॥ १२ ॥
अवनीदिविषन्निवासयोग्यो
भवनानां निवहोऽथ तत्रतत्र ।
नगरान्तर[4]क्लृप्त शिल्पिसङ्घै-
र्नगराजोन्नतिभङ्गमादधानः ॥ १३ ॥
कुतुकादनुदेशमाशु चेलुः
कुशलाः [5]कञ्चुकिनो निमन्त्रणाय ।
कुलशेखरलेखमुद्वहन्तः
कुलशीलश्रुतशालिनां द्विजानाम् ॥ १४ ॥
[6]धरणीसुरवर्यधारिणीनां
[7]तरणीनां निकरोऽचरत् [8]सरस्सु ।

---

१ औन्नत्यम्. २ षड्वर्षेषु भवम्, 'कालाट्ठञ्' इति ठञ्. ३ लक्षदीपोत्सवोपयुक्त-सामग्रीसम्पादनव्यापारेषु. ४ कल्पितः. ५ सौविदल्लाः. ६ महाराजनिमन्त्रित-तत्तद्ग्रामीणविप्रश्रेष्ठवाहिनीनाम्. ७ नौकानाम्. ८ उपसागरेषु.

उभयत्र चलाच्चलैररित्रैः
कृतपक्षिप्रकरप्रचारशङ्कः ॥ १५ ॥

स्वजनेषु [3]दयाविशेषमेष
प्रथयन् वञ्चिवसुन्धराधिपस्य ।
अतिमात्रमदीपि लक्षदीपो
बहुधाराधितकेरळद्विजातिः ॥ १६ ॥

कथमीरयितुं प्रगल्भताहे
महिमोद्रेकमहं महस्य तस्य ।
इह भारतचक्र ईदृशः क्व
प्रथितः पुण्यविधिः प्रवर्ततेऽद्य ॥ १७ ॥

कथयन्ति बुधा मुधा [6]किमेतत्[7]
कलिकालुष्यमलीमसेऽत्र लोके ।
सुकृतं [8]कृतवद्यदि क्वचित् स्या-
दविलुप्तं तदिहैव धर्मराज्ये ॥ १८ ॥

महती पृतना न [9]तावती[10]ह
प्रकृतीनां महिमापि नैव [11]तावान् ।
बहुधर्मविधेः फलं तदेतद्
यदशेषोपरि नीवृतोऽस्य नाम ॥ १९ ॥

प्रकृतिः सहजैव धार्मिकी यत्
प्रकृतीनामिह वञ्चिराज्यभाजाम् ।
तदिमाः स्वयमादरातिभाराद्
दधुरौत्सुक्यमिहोत्सवेऽतिमात्रम् ॥ २० ॥

---

१ यैर्निबद्धैर्जललोलने सति नौः शीघ्रं गच्छति तानि काष्ठान्यरित्राणि तैः. अत्र ब्राह्मणानां जलमार्गेण वञ्चिनगरागमनसंरम्भो वर्णितः. २ केरलीयेषु. ३ विलक्षणां दयाम्. ४ अराजत्. ५ प्रभावितास्मि. ६ किमिति निषेधे निपातः. न मुधेत्यर्थः. ७ एतद् वक्ष्यमाणम् तच्च 'कलिकालुष्ये'त्यादिना प्रतिपादितम्. ८ कृते युगविशेष इवेति सप्तम्यन्ताद्वतिः. ९ यावती देशान्तरे. १० वञ्चिदेशे. ११ यावान् देशान्तरे.

अनिशं पुनरव्यळीकधर्म-
प्रसितेऽस्मिन् कुलशेखरे विशाखे ।
अवति क्षितिमु[1]त्सवेऽत्र लोकाः
कतिधा नोदसहन्त जागरूकाः ॥ २१ ॥

निज[2]भर्तरि निर्भरानुरागै-
र्निपुणैर्जानपदैः कृषिक्रमेषु ।
स्वगृहाङ्गण एव रोपितानां
फलजालं बहु [3]भूरुहामिह[4][5]ासीत् ॥ २२ ॥

यदकालतया फलादि किञ्चित्
सुलभं नाभवदत्र लक्षदीपे ।
तदपि व्यवसायतश्चिराय
स्वयमुत्पाद्य जनैरिहो[6]पजह्रे ॥ २३ ॥

विबुधैरिह केरळीयविप्रैः
सुहितैः [7]स्वस्थतयाशितामृतान्नैः ।
सुमनोभिरलम्भि कुम्भिनीन्द्र-
प्रवणैर्भूसुरभूयमन्वितार्थम् ॥ २४ ॥

उषसः पुरतः कृतावगाहै-
र्मधुभिन्मन्दिरमण्डपे जपद्भिः ।
कुलशेखरदर्शनात् कृतार्थै-
र्द्विजसार्थैरशनोत्सवोऽन्वभावि ॥ २५ ॥

परिवेषकलोकघोषणाभि-
र्भरिता [8]खादतमोदता समन्तात् ।

१ उत्साहापेक्षेय विषयसप्तमी. २ उचितवृत्तिपरिकल्पनेन. स्वपरिपोषके. ३ कदल्यादीनाम्. ४ उत्सवे. ५ आनीतमभूदित्यर्थः. ६ उपहृतम्. ७ आधिव्याधिराहित्येन स्वर्गस्थतया च. ८ खादत मोदतेत्येवं सततं यत्राभिधीयते सा खादतमोदता क्रिया, 'मयूरव्यंसकादयश्च' इति समासः.

उभयत्र चलाचलैररित्रैः[1]
कृतपत्रिप्रकरप्रचारशङ्कः ॥ १५ ॥
स्वजनेषु[2] दयाविशेषमेष[3]
प्रथयन् वञ्चिवसुन्धराधिपस्य ।
अतिमात्रमदीपि[4] लक्षदीपो
बहुधाराधितकेरळद्विजातिः ॥ १६ ॥
कथमीरयितुं प्रगल्भिताहे[5]
महिमोद्रेकमहं महस्य तस्य ।
इह भारतचक्र ईदृशः क
प्रथितः पुण्यविधिः प्रवर्ततेऽद्य ॥ १७ ॥
कथयन्ति बुधा मुधा किमेतत्[6][7]
कलिकालुष्यमलीमसेऽत्र लोके ।
सुकृतं कृतवद्यदि[8] क्वचित् स्या-
दविलुप्तं तदिहैव धर्मराज्ये ॥ १८ ॥
महती पृतना न तावतीह[9][10]
प्रकृतीनां महिमापि नैव तावान्[11] ।
बहुधर्मविधेः फलं तदेतद्
यदशेषोपरि नीवृतोऽस्य नाम ॥ १९ ॥
प्रकृतिः सहजैव धार्मिकी यत
प्रकृतीनामिह वञ्चिराज्यभाजाम् ।
तदिमाः स्वयमादरातिभाराद्
दधुरौत्सुक्यमिहोत्सवेऽतिमात्रम् ॥ २० ॥

---

१ यैर्निबद्धैर्जललोलने सति नौः शीघ्रं गच्छति तानि काष्ठान्यरित्राणि तैः. अत्र ब्राह्मणानां जलमार्गेण वञ्चिनगरागमनसंरम्भो वर्णितः. २ केरलीयेषु. ३ विलक्षणां दयाम्. ४ अराजत्. ५ प्रभावितास्मि. ६ किमिति निषेधे निपातः. न मुधेत्यर्थः. ७ एतद् वक्ष्यमाणम् तच्च 'कलिकालुष्ये'त्यादिना प्रतिपादितम्. ८ कृते युगविशेष इवेति सप्तम्यन्ताद्वतिः. ९ यावती देशान्तरे. १० वञ्चिदेशे. ११ यावान् देशान्तरे.

अनिशं पुनरव्यलीकधर्म-
प्रसितेऽस्मिन् कुलशेखरे विशाखे ।
अवर्ति क्षितिमु[1]त्सवेऽत्र लोकाः
कतिधा नोदसहन्त जागरूकाः ॥ २१ ॥

नि[2]जभर्तरि निर्भरानुरागै-
र्निपुणैर्जानपदैः कृषिक्रमेषु ।
स्वगृहाङ्गण एव रोपितानां
फलजालं बहु भू[3]रुहामिह[4]ासी[5]त् ॥ २२ ॥

यदकालतया फलादि किञ्चित्
सुलभं नाभवदत्र लक्षदीपे ।
तदपि व्यवसायतश्चिराय
स्वयमुत्पाद्य जनैरिहो[6]पजह्रे ॥ २३ ॥

विबुधैरिह केरळीयविप्रैः
सुहितैः [7]स्वस्थतयाशितामृतान्नैः ।
सुमनोभिरलम्भि कुम्भिनीन्द्र-
प्रवणैर्भूसुरभूयमन्वितार्थम् ॥ २४ ॥

उषसः पुरतः कृतावगाहै-
र्मधुभिन्मान्दिरमण्डपे जपद्भिः ।
कुलशेखरदर्शनात् कृतार्थै-
र्द्विजसार्थैरशनोत्सवोऽन्वभावि ॥ २५ ॥

परिवेषकलोकघोषणाभि-
र्भरिता [8]खादतमोदता समन्तात् ।

१ उत्साहापेक्षेयं विषयसप्तमी. २ उचितवृत्तिपरिकल्पनेन. स्वपरिपोषके. ३ कदल्यादीनाम्. ४ उत्सवे. ५ आनीतमभूदित्यर्थः. ६ उपहृतम्. ७ आधिव्याधिराहित्येन स्वर्गस्थतया च. ८ खादत मोदतेत्येवं सततं यत्राभिधीयते सा खादतमोदता क्रिया, 'मयूरव्यंसकादयश्च' इति समासः.

[1]अशनायिततुन्दिलद्विजानां
वर्वृधे [2]तृप्यतदृप्यता च नित्यम् ॥ २६ ॥

[3]कदलीदळपालिकालिमाभ्र-
स्फुरदच्छच्छविक्रूरतारकासु ।
अनुरागभरं विवृण्वदुच्चै-
र्व्यलसद्[4]भासुरपर्पटेन्दुबिम्बम् ॥ २७ ॥

सरसं वसुधासुधाशनास्ते
सुरभिस्वादुघृताक्तसूपयुक्तम् ।
वरपर्पटचूर्णविप्रकीर्णं
परमामोदनमोदनं तद[5]ादन् ॥ २८ ॥

अपचेलिमचारुराजरम्भा-
फलखण्डाल्लँळितान् घृताव[6]भृष्टान् ।
गुडसङ्कलितान् द्विजातयस्ते
मुखरीभूतमुखाः सुखादखादन् ॥ २९ ॥

[7]दशनैर्विकलैरशक्नुवद्भ्यो
[8]दशिभ्यः खरखाद्यखण्डनाय ।
मृदितानि मृदूकृतानि [9]तानि
प्रददावादरतोऽथ सूदवर्गः ॥ ३० ॥

परिपक्रिमत[10]क्रतेमनौघं
परितो [11]जेमनसेतुनावरुध्य

१ अशनायिता बुभुक्षिता ये तुन्दिलद्विजाः पिचण्डिलब्राह्मणास्तेषाम्. २ तृप्यत दृप्यतेति सततं यत्राभिधीयते सा तृप्यतदृप्यता. ३ कदलीदलकालिम्नैवाभ्रं आकाशं तत्र स्फुरन्तः अच्छच्छवयः कूरा अन्नान्येव तारकाश्चन्द्रभार्यास्तासु. ४ भासुरो वर्तुलत्वेन शोभमानः पर्पटः पिष्टकभेद एव इन्दुबिम्बम्. ५ अभक्षयन्. ६ अवपूर्वाद् भ्रस्ज् धातोः क्तप्रत्ययः. ७ हेतौ तृतीया. ८ वृद्धेभ्यः. ९ खरखाद्यानि. १० तक्रविकारतेमनप्रवाहम्. ११ अन्नसेतुना.

प्रसृतिप्रमितं मुहुः पिबद्भिः
प्रमदाब्धौ पृथिवीसुरैर्ममज्जे ॥ ३१ ॥

अपि सूपरसं सतिन्त्रिणीकं
निपुणद्राविडसूदसाधितं ते ।
अपिबन् मृदुसक्तुपर्पटाली-
रुपदश्योदरपूरमादरेण ॥ ३२ ॥

नवफाणितनालिकेरदुग्ध-
व्यतिकीर्णस्पृहणीयपिष्टराद्धम् ।
मधुरान्नपुरोगतायथार्थ-
प्रथमाख्यं किमपि द्विजैरभोजि ॥ ३३ ॥

उदितादरमुर्वरासुराणा-
मदतामुत्कटमाधुरीकमन्धः ।
रसनाजडिमापनीयते स्म
स्फुटकट्वम्लरसेन तेमनेन ॥ ३४ ॥

अतिनिर्मलशोभलोभनीयं
गुणसन्दोहसमाहृतं सुसान्द्रम् ।
दधि किन्नु यशो विशाखभर्तु-
र्द्विजसंसत् प्रशशंस सप्रसादम् ॥ ३५ ॥

वरदाधिकभक्तता तदानी-
मवनीनिर्जरसां द्विधा बभूव ।

१ 'अर्धाञ्जलिस्तु प्रसृतिः' इत्यमरः. २ भावे लिट्. ३ 'चर्मोदरयोः पूरेः' इति णमुल्. ४ फाणितमिक्षुरसविकारः. ५ पायसविशेषस्य केरळेषु प्रथममिति संज्ञा. ६ चिरं हि चर्व्यमाणे मधुररसे जिह्वाजाड्यमुत्पद्यते. ७ अपनीतः. ८ गुणाः सूदाः दयादयश्च. ९ किंन्विति सम्भावनायाम्. दध्नि यशस्त्वमुत्प्रेक्ष्यते. १० वरदे अभीष्टदे विष्णौ अधिकभक्ताः अत्यन्तभक्तास्तेषां भावस्तत्ता, अथ च वरं श्रेष्ठं दाधिकं दध्नि संस्कृतं भक्तमन्नं येषां तेषां भावस्तत्ता. दाधिकेत्यत्र 'दध्नष्ठक्' इति ठक्. काव्यलिङ्गमलङ्कारः.

स्तुवतामरविन्दनाभमुच्चै-
रदतां दध्युपसिक्तमन्नराशिम् ॥ ३६ ॥
गुडसक्तुविनिर्मितैरपूपै-
[1]र्वटकैर्निस्तुषमाषसंप्रक्लप्तैः ।
तिलसंकलितैश्च [2]लड्डुकैस्त्वा-
नलमा[3]रालिकपालिराराध ॥ ३७ ॥
सलिलं विमलं स विप्रसङ्घः
श्रपितं [4]नागरमुद्गजीरकेण ।
निपपावथ [5]सर्वतोमुखत्वं
[6]चकमे तद्गतमात्मनिष्ठमेव ॥ ३८ ॥
पनसस्य फलानि पक्त्रिमाणि
द्रुतहेमप्रतिमामलप्रभाणि ।
[7]मकरन्दकरम्बितान्यदद्भिः
कुतुकस्मेरमुखैरभावि विप्रैः ॥ ३९ ॥
पृथुलामथ [8]हरिणीं द्विजौघो
वरनारीकुचमण्डलीसमानाम् ।
सहकारफलावलीं [9]चुचूषो-
[10]ज्ज्वलतारुण्यभरेण भासमानाम् ॥ ४० ॥
[11]अदसीयफलैर्धरासुराणां
वदनाम्भोजकदम्बकं विकासम् ।

१ पिष्टकभेदैः. २ गोळकाकारैर्भक्ष्यविशेषैः. ३ सूदसमूहः. ४ नागरं शुण्ठी, मुद्गो धान्यभेदः, जीरको जीरः, एतेषां समाहारद्वन्द्वः. ५ सर्वतोमुखं जलं 'उदकं पाथः पुष्करं सर्वतोमुखम्' इत्यमरः. सर्वतोऽभितो मुखमाननं यस्य स च तस्य भाव-स्तत्त्वम्. ६ ऐच्छत्. प्रशस्तपानीयपानाय वहुमुखत्वमभिललाषेत्यर्थः. ७ मधुरस-व्यामिश्राणि. ८ मनोज्ञां हारवतीं च. ९ अपिबत्, चखादेति वक्तव्ये चुचूषेत्युक्तिः स-हकारफलावले रसैकमयत्वस्फोरणाय कुचान्वयाय च. १० उज्ज्वलता शोभमानेनारु-ण्यभरेण शोणिमातिशयेन, अथ च उज्ज्वलो यस्तारुण्यभरो यौवनातिशयस्तेन. ११ कदलीसम्बन्धिफलैः.

यदनायितरामभूद्यथार्थो
कदळीनां तदिहांशुमत्फलाख्या ॥ ४१ ॥

लघुपथ्यहिताशनैषिणस्तु
प्रग एवातुरगेहमेत्य विप्राः ।
सकुलत्थमभुञ्जतोष्णिकान्नं
मरिचोपस्कृतलेह्यतेमनेन ॥ ४२ ॥

परिहासवचांसि केरळीय-
द्विजसङ्घस्य समत्सरोऽप्यजस्रम् ।
ममृषे कुलशेखराद्विशाखा-
श्चकितः पाचकपाण्ड्यबाडवौघः ॥ ४३ ॥

इह केऽपि हि केरळीयविप्राः
खलशीलाः परदेशिसावहेळाः ।
अपि मन्त्रिणमाह्वयन्ति सूची-
पदसंबोधनया स्म निर्विशङ्कम् ॥ ४४ ॥

अथ चर्वितचारुनागवल्ली–
दळघोण्टाफलधूमपत्रखण्डः ।
अवनीसुरसञ्चयः समन्ता-
दधिशिश्ये प्रतिवेश्म विश्रमाय ॥ ४५ ॥

क्षितिदेववरा वराटिकाङ्कैः
प्रतिपाद्य श्रुतिपादवर्णपङ्क्तीः ।

१ तस्मात् कारणात्. २ अंशुमन्ति कान्तिमन्ति फलानि यस्याः सांशुमत्फलेत्या-स्या नामधेयम्, 'रम्भा मोचांशुमत्फला' इत्यमरः, अथचांशुमन्तः सर्याः सूर्यसदृशानी-त्यर्थः फलानि यस्याः सांशुमत्फला. एवं च फलानामम्भोजविकासकत्वमुचितम्. ३ प्रातः. ४ कुलत्थः कलायभेदः. ५ उष्णिका यवागूः. ६ परदेशो निवासत्वेना-स्त्येषामिति परदेशिनस्तेषु सावहेलाः सावज्ञाः. ७ 'पाण्ड्याः किल मणिकनकमयीं लङ्कां गत्वापि अपूर्ववस्तुप्रार्थनाजाड्येन विभीषणादायसीं सूचीमेवालभन्ते'ति कल्पनया केरली-या जडतात्पर्येण वैदेशिकान् प्रति सूचीपदं प्रयुञ्जते. ८ 'घोण्टा तु पूगः क्रमुकः' इत्यमरः.

मतिमत्सु वटुष्वमूः पठत्सु
स्तुतिभिस्तानुदसीषहन्निहोच्चैः ॥ ४६ ॥

यदि कश्चन वेदपादमङ्कै-[1]
र्विवरीतुं जनितोद्यमोऽन्तराळे ।
इतरेण तमाशु बोधितोऽभू-
ज्जहसुः क्षिप्रममुं मुखे तदा ते ॥ ४७ ॥

नृपतेः क्षितिदेवपक्षपाता-
दतिविस्रब्धधियो द्विजातयोऽमी ।
अपि राजगृहोदराणि जग्मुः
प्रतिहारैरनिवारितप्रवेशाः ॥ ४८ ॥

नरपालशिखामणिं विशाखं
भृशमश्लाघत भूसुरोत्करोऽसौ ।
उपचारविधेर्महत्त्वमुच्चै-
र्विदधानं कृतकेतरादरेण ॥ ४९ ॥

अपराह्ण इमे समेऽपि विप्राः
सपदि श्रीपतिमन्दिरे समेताः ।
उपविश्य कुशास्तृतासु पीठी-
ष्वपठन् नामसहस्रमच्युतस्य ॥ ५० ॥

द्विजमण्डलजप्यमाननाम-
श्रवणानन्दितमिन्दिरासनाथम् ।
समुपेत्य कृतप्रदक्षिणः क्ष्मा-
रमणोऽवन्दत सान्द्रभक्तिभारः ॥ ५१ ॥

पिबतां नयनैर्निमेषनिस्स्वैः
परमासेचनकं[2] नृपालरूपम् ।

१ वेदपादम्. २ 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनाद्' इत्यमरः.

स्मरतामिदमीयसद्गुणौघं
　　मुदमाप्नो हृदि मेदिनीसुराणाम् ॥ ५२ ॥

सकृदीक्षणमात्रतो धरित्री-
　　सुरवर्गेऽत्र पुमांसमेकमेकम् ।
कुलशेखरराट् कुशाग्रबुद्धिः
　　कुलशाखादिविवेकतोऽभ्यगच्छत् ॥ ५३ ॥

गळितेऽहनि पद्मतीर्थतीरे
　　मिळितैः पर्णकुटीरपूर्णशोभे ।
अमरैरवनेरुपास्य सन्ध्यां
　　जलदेवत्यजपः प्रपञ्चितोऽभूत् ॥ ५४ ॥

प्रयतः कृतसान्धिवेलकृत्यः
　　स्वयमत्र क्षितिवृत्रशत्रुरेत्य ।
जपतो विहितप्रदक्षिणस्तान्
　　मुदमुच्चैर्दधदर्चयाञ्चकार ॥ ५५ ॥

लभते महनीयतां कदाचि-
　　द्गुणवत्सङ्गवशात् खलोऽपि लोके ।
पृथिवीसुरसङ्गतस्य भूपः
　　परिचर्यामकरोज्जलाशयस्य ॥ ५६ ॥

क्षितिपालमणौ निजं निकेतं
　　प्रतियाते क्षणदासजग्धिलोलम् ।
क्षितिदेवकुलं मुदाकुलं तत्
　　कृतकोलाहलमाप भुक्तिशालम् ॥ ५७ ॥

१ अवगतवान्. 'असकृत् परिचितानामपि बहूनां कुलवेदगोत्रादिकं नावधारयितुं शक्यते, अयं पुनः सकृत्परिचयमात्रेण सहस्राधिकानां तदवधारितवानित्यहो मेधावित्वमस्येति' भावः. २ पद्मतीर्थं नाम सरः, तत्तीरे. ३ जलदेवताकमन्त्रजपः. ४ प्रदक्षिणादिकम्. ५ उक्तसरसः जडचित्तस्य च, अर्थान्तरन्यासः. ६ 'विभाषा सेने'त्यादिना क्लीबत्वम्.

अथ पूर्ववदेव भुक्तवद्भ्यः
प्रददावौदनिकव्रजो द्विजेभ्यः ।
कदळीदळसम्पुटावबद्धान्
पृथुकान् फाणितमिश्रितान् सकेरान् ॥ ५८ ॥

आसाद्य स्वस्वशालागृहमथ पृथुकान् केऽपि विक्रीय केऽपि
स्वैरं भुक्त्वा धनायामपि भृशमशनायां निजां पूरयन्तः ।
गायन्तः केऽपि नृत्तव्यतिकरसरसाः केऽपि विद्वद्वितण्डा-
चण्डाः केऽप्यानिशीथं विविधविहृतयो रेमिरे भूमिदेवाः ॥ ५९ ॥

इत्थं पृथ्वीसुरैस्तैः प्रमुदितहृदयैरष्टकृत्वस्त्रिवेदी-
पाठे निर्वर्तितेऽथ क्षितिवलमथनः श्रद्धया बद्धदीक्षः ।
भद्रं तं भद्रदीपं विधिमपि विधिवत् साधयित्वैधितश्रीः
षट्पञ्चाशद्दिनान्ते सुमहितमतनोदुत्सवं लक्षदीपम् ॥ ६० ॥

प्रत्यक्षं प्रकटीकृताः किमु तदा स्वीयप्रतापाङ्कुराः
प्रस्तीमज्वलितप्रदीपपटलव्याजेन भूजानिना ।
दुर्भूपालकदुर्यशःसमुदयश्चाविष्कृतो निर्भर-
व्योमाभोगवितायमानविचलद्धूमच्छटाच्छद्मना ॥ ६१ ॥

निर्वर्त्यैवमभूतपूर्वविधया श्रीलक्षदीपोत्सवं
प्रत्यग्रादरमग्रजन्मसु यथायोग्यं विधायार्हणाम् ।
सम्मानैः स्वजनांश्च सज्जनहितः सन्तर्प्य सर्वात्मना
स्वात्मानं व्यतनोद्विशाखनृपतिः श्रीपद्मनाभार्पितम् ॥ ६२ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।

१ षड्विंशादिद्विचत्वारिंशान्तश्लोकोक्तप्रकारेणेत्यर्थः. २ चिपिटान्. ३ नालिकेर-शकलसहितान्. ४ धनलोभम्. ५ बुभुक्षाम्. ६ भद्रदीपविधिर्ब्रह्माण्डपुराणोक्तः पुरा कार्तवीर्येणानुष्ठितः. ७ प्रपूर्वात् स्त्यैधातोः क्तप्रत्यये रूपं प्रस्तीमेति, संहतेत्यर्थः. सापह्नवोत्प्रेक्षा. ८ अपूर्वप्रकारेणेत्यर्थः.

काव्ये तस्य कृतौ विशाखविजये श्रीलक्षदीपोत्सव-
प्रस्तावी दशमस्समाप्तिमगमत् सर्गो निसर्गोज्ज्वलः ॥ ६३ ॥

इति श्रीविशाखविजये दशमः सर्गः.

---

## एकादशः सर्गः

श्रीरामवर्मक्षितिपालशेखरः
सरोजनाभाङ्घ्रिसमर्पिताशयः ।
निस्तन्द्रधीर्निर्मलधर्मकर्मसु
प्रवर्तमानो मुदमातनोत् सताम् ॥ १ ॥

भूयिष्ठभूदेवमुदावहे महे
महीमहेन्द्रेण हरेरनुग्रहात् ।
निर्वर्तिते सर्वजनाभिनन्दिते
कृतार्थता काप्यमुनान्वभूयत ॥ २ ॥

धर्मैकतानस्य चिरात् सुरापगा-
वगाहमुख्ये सुकृते महीपतेः ।
यासीत्तदा साधिकमैधत स्पृहा
महात्मनां श्रेयसि न ह्यलंमतिः ॥ ३ ॥

देवापगां गन्तुमसावपारय-
द्यदा न कस्मादपि कारणात्तदा ।
भागीरथी सा स्वयमन्तिकेऽजनि
क्ष्माभृतामग्रेसरस्य नन्दिनी ॥ ४ ॥

भागीरथीं सेवितुमुत्सुके तदा
विशाखदेवे तनयैकवत्सला ।
पुत्रीमिषादन्तिकमस्य भाविनं
महोच्छ्रयं वक्तुमिवाजगाम सा ॥ ५ ॥

---

१ लक्षदीपोत्सवे. २ अलंबुद्धिः. ३ गङ्गा तन्नामिका कन्या च. ४ पर्वतानां राज्ञां च. ५ हिमवतः विशाखराजस्य च. ६ सुब्रह्मण्ये राज्ञि च.

वाराणसीशं सुरनिम्नगाप्लवात्[1]
पवित्रितो वन्दितुमिन्दुशेखरम् ।
नानाजनस्थानगताः परिष्क्रिया
निरीक्षितुं च क्षितिजानिरैहत ॥ ६ ॥

विख्यातवैदुष्यविशाखवाञ्छिरा-
ड्विलोकनेच्छाविवशीकृताशयैः ।
मन्त्रिप्रधानैरिह भारतेश्वरी-
नियोजितैस्तन्मत[2]मभ्यनन्द्यत[3] ॥ ७ ॥

काशीं यियासोरथ काश्यपीपते-
र्निदेशतः केऽपि निजाधिकारिणः ।
मार्गेष्वपि स्वान् नियमान[4]नुज्झतः
पुरः प्रचेलुः पदवीरवेक्षितुं ॥ ८ ॥

दूरं प्रतिष्ठासुरभेद्यनिश्चयो
विशाखराडध्वनि यद्यदात्मनः ।
आवश्यकं सानुचरस्य सर्वम-
प्यसज्जयत्तत्तदतीव सूक्ष्मदृक् ॥ ९ ॥

प्रस्थानयोग्ये दिवसेऽथ निश्चिते
क्षणेन सज्जीकृतसर्वसाधनः ।
विश्रान्तचित्तस्तदुपागमे[5]ऽधिकम्
धृतत्वरोऽभूदचिरक्रियो नृपः ॥ १० ॥

उत्कण्ठिता बाढमुपात्तनिश्चये
विदूरयानाय विशाखभूपतौ ।
क्षेमाय भर्तुर्जनता गुणाम्बुधे-
रहर्निशं प्रार्थयतान्तकान्तकम् ॥ ११ ॥

१ गङ्गास्नानात्. २ राजाभिप्रायः ३ अभिनन्दितम्. ४ स्वस्वाधिकारनियत-धर्मानित्यर्थः. ५ प्रस्थानयोग्यदिवसप्राप्तौ.

यात्रादिने प्रत्युषसि क्षितीशिता
कृतावगाहः कुलदैवतालयम् ।
प्राप्य प्रणम्य प्रणतार्त्तिभञ्जनं
जनार्दनं प्रार्थयतैवमादृतः ॥ १२ ॥

भावत्कपादाम्बुजदासतोचितं
तदीयनिर्णेजनतोयसेवनम्[1] ।
आशंसमानोऽद्य यियासुरर्थये
भवत्कृपां भक्तजनैकबान्धव! ॥ १३ ॥

आ शैशवान्मामनुकम्पयानिशं
त्वयि प्रभो रक्षति निर्व्यलीकया[2] ।
त्रायस्व मामित्यधुना ममार्थना
जनार्दन! स्यान्न कथं कदर्थना ॥ १४ ॥

जानामि नाहं हितमात्मनस्तथा
यथा त्वमीशो भुवि भूतभव्ययोः ।
सर्वात्मना त्वां शरणं प्रपद्य तत्
प्रसादयाम्येव न किञ्चिदर्थये ॥ १५ ॥

दासं दवीयांसमपि त्वमात्मनो
दयापयोधे! परिपालयिष्यसि ।
यो विप्रकृष्टो वपुषैव तावकात्
पदाब्जद्वयेयं न हृदा कदाचन ॥ १६ ॥

आमन्त्र्य देवं विहितोपदः पदे
नृदेवचूडामणिरादरोद्धुरः ।
श्रीपद्मतीर्थाभरणोपकारिका-
कृताशनः प्रास्थितवान् रथस्थितः ॥ १७ ॥

---

१ तदीयं भावत्कपादाम्बुजसम्बन्धि यन्निर्णेजनतोयं प्रक्षाळनजलं गङ्गात्मकं, तस्य सेवनम्. २ निर्व्याजया. आक्षेपालङ्कारः.

कीर्त्तिक्षमाबुद्धिसमाः कुमारिकाः
क्षमाहिमांशोरसमानमानदाः ।
राज्ञीसमेताः सविधालयस्थिताः
प्रसन्नभावाः पितरं व्यलोकयन् ॥ १८ ॥

श्रीशालिनारायणनन्दनान्वितो
नृपावरोधस्तु पुरैव निर्गतः ।
श्रीशालिवाटीपुरमेत्य कौतुका-
दुवास नाथागमनप्रतीक्षया ॥ १९ ॥

कस्याभवन्न स्पृहयालु मानसं
तदानुयातुं वसुधाबिडौजसम् ।
गात्रेण निर्गन्तुमपारयन् स्वयं
जनो निजस्वामिनमन्वगाद्धृदा ॥ २० ॥

प्रस्थानकाले पृथिवीपुरन्दरं
प्रहर्षयन्नूर्ध्वमुपात्तमण्डलः ।
प्रादुर्बभूव द्विजराडभङ्गुरं
प्रकाशयन् यानमुहूर्तमङ्गलम् ॥ २१ ॥

भक्तानुकम्पापरतन्त्रमानसः
स्वभक्तभूपालशुभं विभावयन् ।
पत्रं स्वकीयं शतपत्रलोचनः
प्रवर्तयामास किमत्र कर्माणि ॥ २२ ॥

मन्दोऽनुकूलो मरुदाववौ तदा
मनोऽभिरामं रुरुवुर्विहङ्गमाः ।
मन्दोष्मणाभावि मरीचिमालिना
महानुभावस्य नृपस्य निर्गमे ॥ २३ ॥

---

१ राज्ञीभ्यां लक्ष्मीपार्वतीभ्यां समेताः. २ श्रीनारायणाख्यपुत्रान्वितः. ३ राजभार्या. ४ राजप्रस्थानात्प्रागेव. ५ अशक्नुवन्. ६ गरुडपक्षी. तस्य हि दर्शनं निर्विघ्नकार्यसिद्धिं शंसति. ७ राजप्रस्थानकालिकप्रादुर्भावरूपे. स्वभावसन्निहितो गरुडो भगवत्साभिभाषितत्वेनोत्प्रेक्ष्यते.

पुष्यद्रुचा पुष्यरथेन पूरुष-
प्रधानमच्छच्छविवाजिराजिना ।
निर्जग्मिवत् पौरजनैः सकौतुकं
व्यालोकि सोत्कण्ठमकुण्ठवैभवम् ॥ २४ ॥

अन्वीयमानो निजपारिपार्श्विकै-
रधिष्ठितः स्यन्दनमुज्ज्वलाकृति ।
अभ्राजतोन्मीलितलोकलोचना-
रविन्दबृन्दोऽध्वनि लोकबान्धवः ॥ २५ ॥

श्रीरामराजो नगरीं गरीयसे
स्वकीयकृत्याय विहाय निर्गतः ।
धीराग्रगण्यो गुरुवाक्यपालको
बुधैः पुरेवाधिकमभ्यनन्द्यत ॥ २६ ॥

संघीभवन्तः परितः पुरौकसः
प्रसन्नवक्त्राम्बुजमालुलोकिरे ।
कौतूहलोत्फुल्लदृशः सहस्रशो
विशाखमाखण्डलतुल्यतेजसम् ॥ २७ ॥

सर्वंसहानाथरथानुधाविभिः
समुद्धता पांसुपरम्परा पथि ।
आलक्षि भर्तारमुदारमादरा-
दनुव्रजन्ती वसुधेव वल्लभा ॥ २८ ॥

पौरेक्षणानामनुगच्छतां तदा
सुदूरमुर्वीपतिमूढसौहृदम् ।

---

१ नराधिपः, कर्म. २ विलोकितम्. ३ लोकहितकारी सूर्यश्च. ४ भागीरथीयात्रार्थं राक्षसवधाय च. ५ पुरा त्रेतायां यथा गुरुवाक्यानुरोधात् सातिशयसौख्यहेतुं पुरीं त्यक्त्वा निर्गतो बुधैरभिनन्दितोऽभूत्, तथाधुनापीत्यर्थः. एतेन रामराजस्य पुरातनरामराजाभेदो ध्वनितः. ६ पौराः. ७ विशाखराजम्.

सीमा बभूवाश्रु[1]झरी निरीयुषी
विषीदतां गाढमितो निवर्तने ॥ २९ ॥

अव्याहतामास्तिकतामकृत्रिमा-
मे[2]मुष्य धर्मस्थितिमप्यवे[3]युषाम् ।
यानं शुभोदर्कमिदं भवेदिति
स्थिरः प्ररूढो हृदि निर्णयो नृणाम् ॥ ३० ॥

म[4]ध्येपथं [5]योजितनूतनार्वता
ततः शताङ्गेन शतक्रतूपमः ।
[6]बंहिष्ठवेगेन बभूव भूपति-
र्बहिर्नगर्या बहुमानितो जनैः ॥ ३१ ॥

पार्श्वद्वये पक्त्रिमशालिशालिना
विशालकै[7]दारकमध्यवर्तिना ।
गच्छन् विशाखक्षितिजानिरध्वना
कृ[8]षीवलैरैक्षि कुतूहलाकुलैः ॥ ३२ ॥

क्षोणीपतिः क्षेत्रपरम्परामसा-
वतीत्य वाताधुतशालिमालिकाम् ।
आरण्यकं मार्गमगाहतोन्नत-
द्रुमच्छटाच्छन्नदिनेशदीधितिम् ॥ ३३ ॥

मन्दानिलान्दोलितकुन्दमञ्जरी-
मरन्दसंदोहमिळन्मिळिन्दया ।
अत्यक्रमीदार्यतमृत्तिकाटवी-
मयं सरण्या कलकीरकूजया ॥ ३४ ॥

१ बाष्पजलप्रवाहः 'ओदकान्तात् प्रियं पान्थमनुव्रजेद्' इति वचनाज्जलप्रवाहमवधिं प्राप्यानुगन्तृणां निवृत्तिरिति प्रतिपाद्यते. २ उर्वीपतेः. ३ ज्ञातवताम्. ४ पथो मध्ये. ५ पूर्वयोजितानामश्वानामतिदूरलङ्घनपरिश्रान्तत्वादिति भावः. ६ बहुलतरवेगेन. बहुलशब्दस्येष्ठप्रत्यये बंह्यादेशः. ७ कैदारक केदारसमूहः. 'केदाराद्यञ्च' इति चकाराद् वुञ्. ८ कर्षकैः. ९ इदं कस्यचिद् ग्रामस्य नाम.

अभ्रंकषादभ्रतरूपरिभ्रम-
त्प्रचण्डशाखामृगषण्डमण्डिता ।
श्रीवञ्चिभूमण्डलजम्भमाथिनो
मनो धिनोति स्म घना वनावली ॥ ३९ ॥

[1]अश्वीयहेषाश्रवणाद्विशृङ्खलं
पलायितप्रौढ[2]लुलायमण्डलम् ।
भूपस्य [3]भीतिद्रुतकोलसंकुलं
कुतूहलायाजनि काननस्थलम् ॥ ३६ ॥

क्षो[4]णीभृदध्वन्यचमूरुघोषणा-
दधावि [5]चित्रं चकितैश्चमूरुभिः ।
मार्गे [6]महासेनमहो शिखावळा
विशाखमालोक्य ततः पलायिताः ॥ ३७ ॥

सत्त्वाधिकं वीक्ष्य नृसिंहमागतं
किमत्र चित्रं हरिणैः पलायितम् ।
दृष्ट्वा विटामित्रममुं किमद्भुतं
[8]भुजङ्गभोगेच्छुभिरत्र न स्थितम् ॥ ३८ ॥

यावन्नभोमण्डलमध्यमण्डनं
बभूव नो चण्डमरीचिमण्डलम् ।
क्षीरापगोपान्तकृतं निकेतनं
क्षितीश्वरस्तावदवाप्तवान् जवात् ॥ ३९ ॥

१ अश्वीयमश्वसमूहः. २ 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः. लुलायविशृङ्खलपलायनोक्त्या राजाश्वानामत्युत्तमत्वं ध्वनितम्. ३ भयपलायितसूकरसंकुलम्. ४ क्षोणीभृति पर्वते ये अध्वन्या अध्वगमनशीलाश्चमूरवस्तेषां घोषणात्. 'भीत्रार्थानां-' इत्यपादानत्वम्, अथच क्षोणीभृतो राज्ञो ये अध्वन्याश्चमवः सेनास्तासां उरुघोषणान्महाशब्दात्. ५ चमूरवश्चमूरुभ्यो बिभ्यतीत्याश्चर्यम्. ६ महासेनं स्कन्दं, महती सेना यस्य तं च. ७ मयूराणां हि स्कन्दोपसर्पणं युक्तं, न तु ततः पलायनम्. विरोधालङ्कारः. ८ विटसुखेच्छुभिः भक्षणाय सर्पशरीरेच्छुभिश्च. अत्र च पूर्वोक्तमृगमयूरपलायनस्य न्याय्यत्वं समर्थ्यते.

अभ्यागते तावदिहावनीपतौ
वनी न पूर्वस्थितिमुज्झति स्म सा ।
अद्धा तदानीमपि खड्गिभिर्वृता
बभूव यत् कञ्चुकिभिश्च भीषणैः ॥ ४० ॥

वाटीलसत्केतनकोटिशाटिका-
स्फुटीकृतस्वागतसूक्तिफक्किकाम् ।
आटीकतामावटवीतटीकुटीं
पटीयसा शिल्पिकुलेन कल्पिताम् ॥ ४१ ॥

वन्यामवन्यामपरत्र दुर्लभां
निभालयन्निर्निमिषेण चक्षुषा ।
शेषं दिनस्यैष वनान्तरालये
निनाय तत्रावनिनायकाग्रणीः ॥ ४२ ॥

भुक्त्वा ततो नक्तमितो विनिर्ययौ
प्रदीपयष्टिप्रकरप्रभाभरैः ।
ध्वस्तान्धकारेण स काननाध्वना
जनाधिनाथो जवनं श्रितो रथम् ॥ ४३ ॥

वन्याध्वमध्ये नृपकिङ्करोद्धृत-
प्रदीप्रदीपालिरदीपि दाववत् ।
खद्योतजालान्यलसन् स्फुलिङ्गवत्
तथा रथोद्धूतरजांसि धूमवत् ॥ ४४ ॥

उद्दीप्रदीपाङ्कुरतारकोत्करे
महीरुहव्यूहघने महावने ।

---

१ मृगविशेषैः खड्गधारिभिश्च. २ सर्पैः अन्तःपुरचारिभिश्च. ३ वाटीषु लसतां केतनानां ध्वजानां कोटिषु अग्रिषु या शाटिका अंशुकं तया स्फुटीकृता स्वागतसूक्तिफक्किका स्वागतवचनरीतिर्यस्यां ताम्. ४ वनसमूहम्. ५ निरूपयन्. ६ अराजत, सावयवोपमा.

नीले विशाले नभसीव नाम्यभूत्
[1]तमस्तु [2]राजानम[3]खण्डमण्डलम् ॥ ४५ ॥

दूरं [4]धावे द्विरदैर्मदोत्कटै-
[5]र्वनैकतानैरव[6]नैकतानताम् ।
बिभ्रत्यमुष्मिन् मदलेशवर्जिते
पदं दृशोर्गायुषि [7]राजकुञ्जरे ॥ ४६ ॥

भूपालशार्दूलबलावलोकनात्
[8]पलायि शार्दूलवरैः सुदूरतः ।
किं भूमिभृत्सानुचरोऽ[9]गमित्यमी
[12]तदीयसाम्याय तदा तथाभवन् ॥ ४७ ॥

मीनैस्स्रवन्तीमनु मीनकेतन-
स्मयापहश्रीः स्वनिवासमागतः ।
तावद्विशश्राम विशामधीशिता
न यावदै[15]न्द्री दिगलोहि[16]तायत ॥ ४८ ॥

[17]प्रात्यूषिकीं पार्थिवपुङ्गवस्ततः
प्रतायमानां सुषमां क्रमाद्वने ।
पद्भ्यामटन् प्रस्तरकूटसङ्कटे
तटे तटिन्याः [18]परितोऽयमैक्षत ॥ ४९ ॥

क्रीडार्थमम्भस्यवतीर्य शैशिराद्
विजृम्भितां[19]ल्लम्भितकूटपाकलान् ।

---

१ ध्वान्तं राहुश्च. २ नृपं चन्द्रं च. ३ अखण्डराष्ट्रं अखण्डबिम्बं च. ४ धावितम्. ५ वनतत्परैः. ६ वनैकतानत्वाभावं रक्षणतत्परत्वं च. ७ गजश्रेष्ठे नृपश्रेष्ठे च, अत्र राज-कुञ्जरस्येतरकुञ्जरेभ्यो व्यतिरेक उक्तः. ८ पलायितम्. ९ पर्वतप्रस्थचारी, अनुचर-सहितो राजा च. १० भूपालशार्दूलः. ११ शार्दूलवराः १२ भूपालशार्दूलसंबन्धि सादृश्यं लब्धुमित्यर्थः. १३ भूमिभृत्सानुचराः, उत्प्रेक्षालङ्कारः. १४ नदीविशेषम्. १५ प्राची. १६ लोहिताभवत्, अरुणकान्त्येति भावः, 'लोहितादिडाज्भ्यः—' इति क्यष्. १७ प्रातस्तनीम्. १८ समन्तात्, अर्थात्तटिनीतटस्य. १९ लम्भितः कूटपाकलो गजज्वरो यैस्तान्.

स्तम्बेरमान् स्तब्धतयेव [1]संस्थितान्
नृपो ददर्शाधि[2]सरिन्महोपलान् ॥ ९० ॥

नानाप्रकारेश्वरसृष्टिचातुरी-
परीक्षणानन्दरसानुभाविनः ।
राज्ञस्तदानीं बहुविज्ञतानिधे-
र्दधेऽन्तरङ्गं कुतुकोत्तरङ्गताम् ॥ ९१ ॥

बालातपोद्गारतुषारसंहति-
द्युतिस्फुरल्लोहितपाण्डराम्बरे ।
प्राभातिकी श्रीरपि [3]शैशिरी तदा
[4]प्रभोरभूतां परिचारिके उभे ॥ ९२ ॥

[5]दोषाकरालोककदर्थिता [6]सती
[7]जलावृता या निमिमील पद्मिनी ।
[8]सूर्यागमामोदविकासिनीं तदा
मुदा नृदेवः कलयांबभूव ताम् ॥ ९३ ॥

व्योम्न्युज्जिहानेन [9]पतङ्गमण्डल-
द्वयेन रेजुर्वनराजयस्तदा ।
[10]यत्पादपाताद[11]गमूर्धसु स्थितं
हिमं समन्तादगलन्निरर्गळम् ॥ ९४ ॥

विस्तारयँल्लोध्र[12]रजःपरम्परा-
दुकूलमालामधिमार्गमग्रतः ।

---

१ मृतान्. २ सरिति. उत्प्रेक्षा. ३ शिशिरसम्बन्धिनी. ४ राज्ञः. ५ दोषाकरालोकेन चन्द्रप्रकाशेन, पापिष्ठदर्शनेन च कदर्थिता. ६ शोभमाना पतिव्रता च. ७ जलपूर्णा जडपरिवृता च. ८ सूर्यस्य सूरीणां विदुषां च आगमामोदेन विकासिनीम्. ९ सूर्यमण्डलेन पक्षिमण्डलेन च. १० यस्य पतङ्गमण्डलद्वयस्य पादपातात् किरणपातात् चरणपाताच्च. ११ पर्वताग्रेषु वृक्षशिरःसु च. १२ लोध्ररजःपरम्परामेव दुकूलमालाम्, धावल्याद् दुकूलमालात्वेन रूपणम्.

[1]नीहारहारानुपहृत्य शैशिरः
समीरणोऽसेवत वासवं भुवः ॥ ९५ ॥
आचारलाजप्रकरानवाकिर-
न्नरण्यदेव्यो[2] हिमशीकरैर्नृपे ।
अभ्यागते स्वागतसूक्तिवाचिका-
न्युदाहरन्त्यः कृकवाकुकाकुभिः[3] ॥ ९६ ॥
भूपो नवार्कं पुरुहूतसद्मनो
वतंसमुत्प्रैक्षत[5] पौरटं[4] घटम् ।
यत् तद्भवन प्रसरेण रोचिष-
स्तमोमयोऽह्नाय पयोनिधिः पपे[6] ॥ ९७ ॥
उद्यद्भिरुस्रैरतुषारदीधिते-
र्हिमं न तावन्निरकासि[7] शैशिरम् ।
ऊर्जस्वलस्यापि[8] हि का[9]ऽवैभवा-
ज्जडस्वभावे क्रमते न विक्रमः ॥ ९८ ॥
आशावकाशाः प्रचकाशिरेतरा-
मशीतरश्मेः प्रसरद्भिरंशुभिः ।
प्रालेयजालैश्च महीभुजो यथा[10]
प्रतापभारैरपि कीर्त्तिराशिभिः ॥ ९९ ॥
चित्रं धरित्रीरमणानुयायिनां
धृतायुधानां मृगयाकुतूहलात् ।
[11]घृष्टिर्न कोऽप्याप वने स्फुटीभवत्[12]-
सहस्रघृष्टिन्यपि दृष्टिगोचरम् ॥ ६० ॥

---

१ नीहारानेव हारान्. २ वनदेवताः. ३ कुक्कुटकाकुध्वनिभिः. ४ सौर्णम्. ५ इन्द्रगृहालङ्कारसुवर्णघटत्वसम्भावनाविषयनवार्कभवेन. ६ पि॰, कुम्भसम्भवेन हि पयोधिपानमुचितम्. ७ निष्कासितम्. ८ बलवताऽपि. ९ वि॰ खाराजस्य. १०॰ यथेति सादृश्ये, यथासंख्यसंकीर्णः प्रतीपालङ्कारः. ११ कोलः. १२ स्फुटीभवन्तो नयनविषयीभवन्तः सहस्रं घृष्टयः कोला यस्मिंस्तस्मिन्, अथ च स्फुटीभवन् सहस्रघृष्टिः सहस्रांशुर्यस्मिंस्तस्मिन्, विरोधालङ्कारः.

पात्रे दृषत्सन्ततिदन्तुरान्तरे
चिरं स्रवन्त्याः कुलशेखरश्चरन् ।
किञ्चित्स्फुरद्घर्मकणाङ्कितालिकः
शनैरथ स्नानकुटीरमाययौ ॥ ११ ॥

आदेयतां दधति पानकृतेऽपि तत्र
नादेय एव पयसि स्फटिकावदाते ।
भूयः सुखं कलयतापि नमज्जनस्य
भूपेन मज्जनसुखं कलयांबभूवे ॥ १२ ॥

अथ स विहितसन्ध्योपासनादिस्वकृत्यो
वनभवनमुपेत्य श्रीविशाखावनीन्द्रः
बहुतरकरणीयैर्व्यासजन्नापराह्णं
समयमनयत श्रीपद्मनाभैकभक्तः ॥ १३ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
भाषानाटकमादिमं कृतवतस्तस्य व्यरंसीत् कृतौ
काशीप्रस्थितिमुद्गिरन् नरपतेः सर्गोऽयमेकादशः ॥ १४

इति श्रीविशाखविजये एकादशः सर्गः



द्वादशः सर्गः

श्रियमुरसि दधानमञ्जनाभं
हृदि निदधद्रसुधासुधामयूखः ।

१ 'पारावारे परार्वाची तीरे पात्रं तदन्तरम्' इत्यमरः. २ ग्राह्यताम्. ३ पानार्थम्. ४ आदेयं न भवतीति नादेयं तस्मिन्, नञ्शब्दसमासः, अथ च नदीसंबन्धिनि. ५ न मज्जनस्येति च्छेदः, मज्जनस्य सुखं न कलयतापीति योजना, अथ च नमज्जनस्येत्येकं पदं, नम्रजनस्येत्यर्थः. ६ स्नानसुखम्. ७ कर्मणि लिट्, विरोधालङ्कारः. ८ आसङ्गं कुर्वन्. ९ आपराह्णं अपराह्णं मर्यादीकृत्य, 'आङ् मर्यादाभिविध्योः' इति समासः.

शुभशकुनशतावृतः प्रतस्थे

शफरतटिन्युपशल्यतो विशाखः ॥ १ ॥

विपुलबलनरोत्करोमाह्यना-

मथ शिबिकामधिरुह्य राजराजः[1] ।

अभजत नरवाहनत्वमेष[2]

स्फुटमिह वैश्रवणाभिरामनामा[3] ॥ २ ॥

अकलयदवनीवलारिरग्रे

कटकविळम्बिवलाहकावलीढाः ।

अधिपदवि[4] दवीयसीरसीमा-

स्तरुजटिलाः पटलीः शिलोच्चयामाम् ॥ ३ ॥

अतरदथ तरङ्गिणीं विशालां

तरिवरसङ्घटनादृढे कुटीरे[5] ।

क्षितिरमणमणिः सुखोपविष्टो

जनपदशिल्पधुरीणहूणजुष्टः ॥ ४ ॥

चतुरतरतुरङ्गमोह्यमानं

रथमथ सारथिसज्जनासनाथम् ।

क्षितिपतिकुलशेखरोऽधिरुह्य

द्रुतमतिलङ्घितवान् महावनान्तम् ॥ ५ ॥

अनवधि धनिकैर्वितन्यमाना

वनभुवि कापि[6] कृषिप्रवृत्तिरस्याम् ।

अजनि फलवती यथापुरं[7] ने-

त्यवनिपतिर्विमना मनागिवासीत् ॥ ६ ॥

---

१ राजश्रेष्ठः कुबेरश्च. २ नरा वाहनानि यस्य सः तस्य भावम्, नरवाहननामकत्वं च. ३ वै इति निपातः प्रसिद्धौ, श्रवणाभिरामं श्रुतिरमणीयं नाम यस्य सः, अथ च वैश्रवण इति अभिरामं नाम यस्य सः, प्रकृताप्रकृतविषयः श्लेषः. ४ मार्गे. ५ नौविशेष इत्यर्थः. ६ क्वचन, अथ च 'कापि' इति देशभाषया प्रसिद्धा ओषधिजातिः, तद्विषयककृषिप्रवृत्तिरस्त्यपि प्रतीयते. ७ पूर्ववत्.

भजति दशमितामशीतभाना-
वनुचरमाचलसानु लम्बमाने ।
द्रुतमितरदरण्यवेश्म नाम्ना
कलुतुरुटीं कुलशेखरोऽधिटीके ॥ ७ ॥

स्वजनपदपरीक्षणाय कारु-
प्रवरमुपागतमत्र मद्रदेशात् ।
अवनिपतिरवेक्ष्य संबभाषे
सह निजमण्डलशिल्पिपुङ्गवेन ॥ ८ ॥

अनयदिह निशां विशाखपृथ्वी-
वलभथनो वनपत्तने मनोज्ञे ।
उषसि दिनकरोदयात् पुरस्ता-
दचलदितः पुनरार्यकाननाय ॥ ९ ॥

अविरलतरभूरिभूरुहाळी-
विटपकदम्बनिकुम्बिताम्बरेण ।
नृपतिरथ पथा रथाधिरूढः
सपदि चरन् स्वनिवासमाससाद ॥ १० ॥

अरुणवरणवासिनो जनौघा
धरणिसुराग्रसराः समेत्य तत्र ।
नरवरमुपहृत्य पूर्णकुम्भान्
विरचितभूरितराशिषोऽन्वगृह्णन् ॥ ११ ॥

हरिहरसुतमार्यमर्चयित्वा
हरिरवनेर्विरचय्य नित्यकृत्यम् ।
परिजनसहितश्चलन्नितोऽपि
त्वरितमगाद्बहिरात्ममण्डलस्य ॥ १२ ॥

१ जगाम. २ ग्रामविशेषस्य नामेदम्. ३ निकुम्बितम् आच्छादितम्. ४ अरुणवरण इति ग्रामविशेषस्तद्वासिनः, ५ शास्तारम्. ६ इन्द्रः.

अवतरति विवस्वति प्रतीची-
मवनिभृदप्यवतीर्णनिम्नदेशः ।
रुचिरेतरमवाप तत्र चित्रा[1]-
सरिदुरुनिर्झरसंनिधौ स्वधाम ॥ १३ ॥

सकुतुकमिह शोणसालवासै-
र्नृभिरधिदक्षिणकाशिवासिभिश्च ।
बहुमतिरतिमात्रमाहिताभू-
[2]द्रचितशुभागतिसूक्ति भूमिभर्तुः ॥ १४ ॥

[3]प्रतिवचनमुदारमीरयित्वा
सचिवमुखेन सरोजनाभदासः ।
प्रमदभरतरङ्गितानतानी-
दयमखिलानपि तान् जनानुपेतान् ॥ १५ ॥

अनवरत[4]मुदित्वरोत्सवत्वा-
दवनिभृदग्र्यचतया च तं त्रिकूटम् ।
स्वसम इति समत्सरं किमारात्
समभिजघान तदा पदा विशाखः ॥ १६ ॥

विमलझरजले कृतावगाह-
स्तदनु विधाय दिनावसानकृत्यम् ।
क्षितिपतिरहिमद्युतौ गतेऽस्तं
त्वरितमितोऽभ्यवहृत्य निर्गतोऽभूत् ॥ १७ ॥

अधिरजनि वसुन्धरामरुत्वा-
नधिशयितः शिबिकामटन्नमन्दम् ।
प्रमुदितजनशालि शालिवाटी-
नगरमटीकत भास्करोदयात् प्राक् ॥ १८ ।

---

१ नामेदं नदीविशेषस्य. २ क्रियाविशेषणमिदम्, ३ स्वागतप्रश्नोत्तरम्' ४ उदित्वर उदयशीलः उत्सवो यस्य स तथाभूतस्तस्य भावस्तत्त्वम्, अथ च उदित्वरा उत्सा जलप्रवाहा अस्मिन् सन्तीति उदित्वरोत्सवांस्तस्य भावस्तत्त्वं तस्मात्, ऊत्प्रेक्षालङ्कारः.

विविधजनपदाधिकारधुर्या
विबुधजनाः प्रभवश्च हूणवर्याः ।
नृपतिलकमिहोपचारपूर्वं
सदसि समर्पितसूक्तयोऽभ्यनन्दन् ॥ १९ ॥

उचितमिह सुधीसमाजसूक्ते-
रुपचितनैपुणमुत्तरं ददानः ।
अकथयदयमव्यलीकमेव
प्रकृतिकृते खलु जीवितं ममेति ॥ २० ॥

विबुधपरिषदा तदात्र विद्या-
विषयधृतव्यवसायया कयापि ।
वितरणचणता विशाखवञ्चि-
क्षितिरमणस्य चिरश्रुतान्वभावि ॥ २१ ॥

अथ निशि विहिताशनो विशाखः
शकटवरे सलिलोष्मचाल्यमाने ।
अतिरुचिरमधिष्ठितः कुटीरं
सहदयितः ससुतानुगः प्रतस्थे ॥ २२ ॥

अतिगतबहुयोजनोऽथ तञ्जा-
पुरवरमाप परेद्यवि प्रभाते ।
क्षितिपतिकुलशेखरः खधूम-
ध्वनिमुखरीकृतदिङ्मुखं विशाखः ॥ २३ ॥

सुरुचिरसुषिराद्यवाद्यघोषैः
सुधारसवर्षमादधाना ।
अपचितिमिह वञ्चिवासवस्य
व्यधित यथाविधि राजकीयसेना ॥ २४ ॥

१ सत्यम्. २ The South Indian Literary Society. ३ अनुभूता, विबुधपरिषदे राजा बहु वित्तं प्रादादिति भावः. ४ धूमशकटे. ५ चोळेन्द्रराजधानीम्. ६ पूजाम्.

स्वयमपचितिमक्षमातिथेयी-
　　मतिथिवराय विधातुमत्र राज्ञी ।
निजविषयबहिर्गता तदानी-
　　मघनिभुजे प्रजिघाय पत्रिकां सा ॥ १५ ॥

तदनु तदनुमोदिनीममुष्यै
　　प्रहितवति प्रतिपत्रिकां क्षितीशे ।
सविनयमुपगम्य पौरमुख्यै-
　　रधिसभमेष सभाजयांबभूवे ॥ १६ ॥

अविकलरुचिकालधौतपेटी-
　　मवितथकत्थनसूक्तिपत्रगर्भाम् ।
वितरति विदुषे स्म भूमघोने
　　धृतरति जानपदाग्रणीसमाजः ॥ १७ ॥

स्फुरदुरुतरचातुरीगभीरां
　　गिरमयमुत्तरयांचकार धीरः ।
अधिगलमथ भूभुजो जयश्री-
　　नववरणस्रगिवापि हारयष्टिः ॥ १८ ॥

रथवरमथ पार्थिवोऽधिरूढ-
　　श्चतुरतुरङ्गचतुष्टयोह्यमानम् ।
कुतुकितजननेत्रपीयमानो
　　नगरवरान्तरविक्षदक्षतौजाः ॥ १९ ॥

सुघाटतनववणकम्बळाना
　　मटुलपदं चलतां क्रमेळकानाम् ।
कुळमतुलकुतूहलैरलोकि
　　क्षितिरमणानुचरैरदृष्टपूर्वम् ॥ २० ॥

---

१ चोलेश्वरी. २ प्रहितवती. ३ स्वागतप्रश्नविभाषिनं लेखम्. ४ कण्ठे, उत्प्रेक्षा. ५ उष्ट्राणाम्.

निपुणतरनिषादिनीयमाना
　निबिडनिबद्धकुथा मतङ्गजेन्द्राः ।
करधृतकरवाळसादिनीता-
　स्तुरगवराश्च पुरोऽचरन् नृपस्य ॥ ३१ ॥

प्रकटितविविधप्रशास्तिलेख-
　प्रकरपरिष्कृतिकायमानपङ्क्त्या ।
बहुजननिविरीसया धरण्या
　हिमकिरणस्य रथोऽगमत् सरण्या ॥ ३२ ॥

नृपकुलतिलकस्य भावुकाय
　श्रुतिमधुरं पठता श्रुतिप्रपञ्चम् ।
अवनिदिविषदां कदम्बकेन
　क्षितिपरथं परितोऽपि च प्रचेले ॥ ३३ ॥

नयनिधिरधिनायको बुधाना-
　मयमुररीकृतधर्मराज्यभारः ।
नयनसफलतां विधातुकामै-
　रयनगतैर्मुदितैरलोकि लोकैः ॥ ३४ ॥

उदवसितमितो महीमरुत्वा-
　नथ कृतसज्जनमात्मनो वसत्यै ।
दिवसमनयदत्र नित्यकृत्यै-
　रुपचरितो बहुधा जनप्रधानैः ॥ ३५ ॥

सुहृदमिह सदाशिवं सुशीलं
　सकुतुकमैक्षत शेषशास्त्रिणं च ।
अवनिभृदधिकारिहूणवर्या-
　नपरजनानरुणाचलादिमांश्च ॥ ३६ ॥

१ निषादिनो गजारोहाः. २ सादिनोऽश्वारोहाः. ३ भूमेः. ४ 'अभितःपरितः--' इति द्वितीया. ५ भावे लिट्. ६ मार्गगतैः. ७ गृहम्. ८ प्रासः. ९ वासाय.

इह भरतकलारहस्यविज्ञैः
सदसि जनैः सरसं प्रयुज्यमानम् ।
निरुपमतमनृत्तगीतवाद्यं
प्रमदमदत्त महीभुजोऽपराह्णे ॥ ३७ ॥

विरचितदिवसावसानकृत्य-
स्त्वरितमितो नृपतिः प्रतिष्ठमानः ।
क्वचन महति देवसद्मनीह
प्रचुरमदादुपदापदार्थसार्थम् ॥ ३८ ॥

जिगमिषुररविन्दनाभदासः
पुनरपि पौरजनैः कृतोपचारः ।
[1]अनलसजवमास्थितोऽथ वेगा-
दगमदनो [2]नयनोत्सवेन तेषाम् ॥ ३९ ॥

अधिनिशमपि वञ्चिवज्रपाणे-
[3]रैरुणशिलोपपुरादिषु स्थलेषु ।
[4]अकलि बहुविधः समेत्य तत्त-
ज्जनपदवासिभिरादरोपचारः ॥ ४० ॥

निजसुखनिरपेक्षतां परार्थं
सततधृतश्रमतां च वञ्चिराजः ।
अधिरजनि विनिद्र एव धिन्वन्
सुजनमनांसि तदा स्फुटीचकार ॥ ४१ ॥

हरिति हरिहयस्य [5]हारिदश्वः
करनिकरो मिलितस्ततः सरागः ।
नृपकुलतिलकावलोकनोत्कः
सपदि नृणां निवहोऽपि मद्रपुर्याम् ॥ ४२ ॥

---

१. अनलेन अग्निना हेतुना सजवं सवेगम्, अमन्दवेगं वा. २ सहार्थे तृतीया, सहोक्त्यलङ्कारः. ३ Chingelput. ४ कलितः. ५ हरिदश्वः सूर्यस्तत्सम्बन्धी, तुल्ययोगितालङ्कारः.

पुरमथ समया गतो विशाखः
पुरुषवरः शकटावरोहघट्टे ।
चिरपरिमिळितैर्जनप्रधानैः
सरभसमेत्य सहर्षमीक्षितोऽभूत् ॥ ४३ ॥
निकटमुपगते महीमघोनः
शकटवरे समभूत् स घट्टदेशः ।
प्रकटकुतुकपौरवर्ययात्रा-
विकटशताङ्गविमर्ददुष्प्रवेशः ॥ ४४ ॥
उपचितकुतुकं पराध्यवेषैः[1]
सपदि पदातिभिरत्र सादिभिश्च ।
क्षितिपतिरुपगम्य मद्रभर्तुः[2]
प्रतिनिधिना सचिवेन बहुमानि ॥ ४५ ॥
कनकरुचिविचित्रविष्टराळी-
विलसितमग्र्यवितानदीप्यमानम् ।
प्रतिनवपटमण्डपं प्रपेदे
नृपकुलमौलिरनेन दत्तहस्तः ॥ ४६ ॥
अथ नृपतिरलंचकार पीठ-
प्रवरमुदारमुदा स्वमन्त्रिजुष्टः ।
निजहृदयगभीरतानुरूप-
स्फुरदभिरूपमुखप्रसन्नभावः ॥ ४७ ॥
अनवरतवितन्यमानधर्म-
क्षतदुरितक्षितिपालवंशरत्नम् ।
अमलतममम् समीक्ष्य चक्षुः
सफलमकारितरां जनैरयत्नम् ॥ ४८ ॥
नगरमिदमगान्निजान्ववाय-
क्षितिपतिषु प्रथमं य एव धीरः ।

---

१ श्रेष्ठवेषैः. २ मद्रभर्तुः प्रतिनिधिना साचिवेन.

स पुनरिह समागतो महाराट्
स्वयमनुनेति जनैरहर्षि गाढम् ॥ ४९ ॥
प्रथितगुणगणं पुराणमित्रं
प्रथममम्मुं पृथिवीभृतां सतां च ।
समुचितनुतिसूक्तिभिः सभायां
सपदि सभाजयति स्म सभ्यसंसत् ॥ ५० ॥
सपदि निपुणमुत्तरं ददानो
नृपतिरमात्यमुखेन सभ्यलोकान् ।
विदधदधिकसम्मदाञ्चिताङ्ग-
प्रवरगतो निजवासमाससाद ॥ ५१ ॥
प्रथमपरिचयेऽत्र मद्रभर्त्रा
प्रथितममुष्य विशाखवञ्चिभर्तुः ।
गुणगणमगणेयमाकलय्य
प्रमदभरः प्रकटीकृतः प्रकामम् ॥ ५२ ॥
क्षितिपतिरपि तद्गुणैरुदारै-
रतिमुदितो दृढनिश्चयत्वमुख्यैः ।
प्रणयमकलयन्निकाममस्मिन्
गुणिनि गुणी रमतेऽनिमित्तमेव ॥ ५३ ॥
नृपतिलकसमागमप्रमोद-
प्रकटनकौतुकितोऽथ मद्रभर्ता ।
नगरगतसदेश्यवर्गमुख्यान्
समतृपदभ्यवहारधोरणीभिः ॥ ५४ ॥
बहुमतिरुचिता व्यतानि कर्णा-
टकनृपवेङ्कटगिर्यधीश्वराद्यैः ।
प्रभुभिरिह पुराधिकारिवर्यै-
रपि कुलशेखरभूपुरन्दरस्य ॥ ५५ ॥

१ भावे लुङ्.

इह बहुजनभावुकाय तास्ता
विविधपरिष्कृतयो विधीयमानाः ।
[1]अतनुतरकुतूहलोत्तरङ्गं
व्यतनिषत क्षितिभर्तुरन्तरङ्गम् ॥ ५६ ॥

अतनुत निजलोक[2]बान्धवत्वं
स्फुटमु[3]पचापितदीनचक्रमोदः ।
नृपातरपहरन्नसावसंख्यै-
र्वसुभि[4]र[5]किंचनतातमःप्रपञ्चम् ॥ ५७ ॥

उदधितटमुदञ्चितादरोऽसा-
विह विहरन् कुहचिद्दिने जनेशः ।
उदयति दिनकृत्युपेत्य नौका-
निलयमलोकत तत्र चित्रशिल्पम् ॥ ५८ ॥

[6]अधिजलधि निमज्जदर्कबिम्बं
निजविषये बहुशो निरीक्षमाणः ।
इह पुनरुदधेस्तदुज्जिहानं
नृपतिरवेक्ष्य मनाक् चमच्चकार ॥ ५९ ॥

क्षितिपतिरितरेद्युराप काम-
प्यतिमहतीमयमापणोपकार्याम् ।
कतिचन रुचिराणि चि[7]क्रिये च
प्रतिनवसौष्ठवपण्यसाधनानि ॥ ६० ॥

उपवनमुपचीयमाननाना-
विधतरुगुल्मलतावितानरम्यम् ।

१ अनल्पकौतुकाकुलम्. २ जनबन्धुभावं सूर्यत्वं च. ३ उपचयं प्रापितो दीनचक्रस्य दरिद्रसमूहस्य दीनानां चक्रवाकाणां च मोदो येन. ४ धनैः किरणैश्च. ५ अकिञ्चनतैव तमःप्रपञ्चस्तम्. ६ स्वनीवृति पश्चिमोदधौ निमज्जदेव सूर्यबिम्बं कलयन्नयं मद्रपुरे पुनः पूर्वाब्धेस्तदुन्मज्जदवलोक्य किमपि विस्मितोऽभूदित्यर्थः. ७ क्रीतवान्.

नृपमणिरपि तत्र पञ्जरान्त-
नियमितपक्षिमृगौघमैक्षतायम् ॥ ६१ ॥

इति त्रिचतुरानसाववनिवासवो वासरा-
निहानयदहर्दिवं बहुमहाजनैर्मानितः ।
ततस्तदनुसन्दधत् [1]परममात्मयात्राफलं
स्वकृत्यनियतोऽधित द्रुतमितः [2][3]प्रतिष्ठासुताम् ॥ ६२ ॥

गोत्रागोत्रभिदध्वमध्यगमहाक्षेत्राणि यात्रान्तरे
गुण्याग्रेसर ईक्षितुं कृतमतिः पुण्यार्जनेनोत्सुकः ।
आराच्छ्रीरमणं निषेवितुमियेषाशेषदोषापहं
श्रीमानेष मनीषिणामचरमः शेषाद्रिभूषायितम् ॥ ६३ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
देशेष्वेष विशाखदेवमभितो यात्राप्रवृत्तं नयन्
सर्गस्तस्य कृतौ मयूरसदृशः पूर्णोऽभवद्द्वादशः ॥ ६४ ॥

इति श्रीविशाखविजये द्वादशः सर्गः

## त्रयोदशः सर्गः

श्रियमुच्चकैर्दधदकैतवया
हरिसेवयैष धरणीरमणः ।
चरणारविन्दम[4]विवन्दिषत
प्रतिपन्नपन्नगनगस्य हरेः ॥ १ ॥

निजसद्गुणप्रकरनिष्कपट-
प्रणयोदितोत्कलिकनागरिकात् ।

---

१ गङ्गास्नानरूपम्. २ प्रस्थातुमिच्छुताम्. ३ 'प्रसितोत्सुकाभ्यां तृतीया च' इति तृतीया. ४ वन्दितुमैच्छत्.

अवनीवलारिरथ मद्रपुरा-
दभिवेङ्कटक्षितिधरं निरगात् ॥ २ ॥

नगरान्निरीयुषि नराधिपता-
वनुगच्छति स्म जनबृन्दममुम् ।
प्रसभं निबध्य निबिरीसतरै-
स्तरसेव कृष्टमदसीयगुणैः ॥ ३ ॥

रचितोपचारमुपयातवतः
परिपृच्छ्य सूरिपरिषत्प्रवरान् ।
अधिरूढधूमशकटो झटिति
क्षितिपोऽत्यगात् सृतिमनल्पतमाम् ॥ ४ ॥

पृथिवीवलद्विपमसेविषत
प्रचुरादराः प्रतिपथं प्रभवः ।
अभिनोदमून् मधुरया च गिरा
कुशलो विशाखकुलशेखरराट् ॥ ५ ॥

चरमाचलाभिमुखमर्करथे
चलति क्षितीश्वरशताङ्गवरः ।
धृतमत्सरो ध्रुवमुदीर्णरयः
समुपेयिवान् वृषगिरिं निकषा ॥ ६ ॥

प्रमदान्धतज्जनपदाधिपति-
द्वितयप्रचोदिततदीयजनैः ।
परिचर्यया विहितया हितया
नितरां तुतोष कृतवित् क्षितिपः ॥ ७ ॥

१ वलात्. २ निबिडतरैः. ३ अदसीया राजसम्बन्धिनो ये गुणाः शौर्यादयो रज्जवश्च तैः. ४ आमन्त्र्य. ५ मार्गम्. ६ अप्रीणयत्. ७ 'अभितःपरितः समया–' इत्यादिना द्वितीया. ८ The Raja of Venkatagiri and the Maharaja of Mysore. ८ कृतज्ञः.

अवलोक्य देवसदनाधिकृतान्
 कृतिनो धृतादरमुपेतवतः ।
अनयन्निशामथ सुखेन विशा-
 मधिपो[1]ऽध्युपत्यकमहीन्द्रगिरेः ॥ ८ ॥

[2]अधिरोढुमद्रिमधिपो महसा-
 मुदयस्य भूमिमुदयुङ्क्त यदा ।
क्षितिवृत्रशत्रुरपि विष्णुपदं
 श्रयितुं तदा तमिममन्वकरोत् ॥ ९ ॥

सुगमां रथोत्तमगतः कि[3]यतीं
 सरणिं विलङ्घ्य धरणीवलभित् ।
शिबिकां प्रकामपटुधुर्यनरा-
 मधिरुह्य दुर्गममगादयनम् ॥ १० ॥

पृथिवीपतिर्भुजगभूमिभृत-
 श्चलितोऽभ्यधित्यकमतिप्रतनम् ।
पृथुलोपलावलिनिबद्धतले
 पथि गोपुरप्रकरमत्यगमत् ॥ ११ ॥

वृषपर्वजारमणपुण्ययशा
 वृषपर्वतस्य विपुलान् कटकान् ।
नवनीपशोभनवनीजटिला-
 नवनीपतिर्झटिति लङ्घितवान् ॥ १२ ॥

१ उपत्यकायाम्. २ अधीति. महसामधिपः सूर्यः. विष्णुपदं अ[illegible] नारायणचरणं च. श्रयितुं सेवितुं, विष्णुपदसेवार्थमित्यर्थः. उदयस्य आविर्भावस्याभि[illegible]द्रेश्च. भूमिं स्थानं. अद्रिं पूर्वगिरिं वेङ्कटगिरिं च. अधिरोढुं यदा उदयुङ्क्त उद्युक्तोऽभूत्. तदा क्षितिवृत्रशत्रुरपि तामिमं सूर्यं अन्वकरोत् अनुकृतवान्. सूर्योदयसमये भगवत्सेवार्थमद्रिमारुरोहेति भावः. ३ अल्पाम्. ४ अतिप्राचीनम्. ५ ययातिवत्पुण्यकीर्तिः.

विषमं क्रमोन्नतमतीत्य जवा-
दयनं द्राविष्ठमपरासुगमम् ।
शिबिकाधराः परिमितानुचरं
नृपमानयन्[1]अहिनगाग्रभुवम् ॥ १३ ॥

मिहि[2]कानिकायकमनीयलस-
न्महिमाकृतिर्बहुशिरोविततिः ।
धरणिभृदेष ह[3]रिणाध्युषितो
ननु शेष इत्यचकलन्नृपतिः ॥ १४ ॥

अयमेति मामनुपमानगुणो
मनुजेन्द्र इत्यलमु[4]दीतमुदः ।
अहिभूभृतोऽट्टहसितप्रसरैः
परितो व्यलासि हिमराशिमिषात् ॥ १५ ॥

परितस्तुषारनिकुरुम्बरुचा
भरितः सरीसृपगिरीन्द्रतटः ।
ददृशे स[5]शेषशयनावसथः
कलशाम्बुराशिरिव शुभ्ररुचिः ॥ १६ ॥

समया गतेन कलिदोषमुषः
कमलापतेर्भगवतः स[6]दनम् ।
विदुषा विशाखविपुलापतिना
शिबिकां विहाय विशि[7]खां [8]विविशे ॥ १७ ॥

निरु[9]पानदङ्घ्रिकमलं चलता
हरिसद्मसन्निहितराजपथे ।

१ शेषगिर्यूर्ध्वभूमिम्. २ मिहिकानिकायेन हिमसमूहेन कमनीया, अथ च मिहिका-निकाय इव कमनीया लसन्महिमा चाकृतिर्यस्य सः- ३ हरिणैर्मृगैरध्युषितः, अथ च हरिणा विष्णुना अध्युषितः. ४ उत्पन्नसंतोषस्य. सापह्नवोत्प्रेक्षा. ५ शेषशयनस्य विष्णोरावसथेन गृहेण सहितः. ६ समयाशब्दयोगे द्वितीया. ७ रथ्या. ८ प्रविष्टा. ९ चलनक्रियाविशेषणमिदम्.

नरपालमौलिमणिना भगव-
त्परिचारकोचितमिहाचरितम् ॥ १८ ॥

कूलसंज्जनं निजनिवासकृते
भवनं समेत्य विहिताप्लवनः ।
अभिवेङ्कटेशसदनं प्रयतः
प्रययौ विशाखपृथिवीमघवा ॥ १९ ॥

भजतामभीष्टमतिदुर्लभम-
प्यविळम्बमेव निखिलं ददतः ।
प्रणनाम वेङ्कटपतेर्नृपति-
र्विहितोपदः पदपयोजयुगम् ॥ २० ॥

पुरुषोत्तमस्य चरणाम्बुजयो-
र्द्रविणं हिरण्मयमवर्षदयम् ।
तपनीयदाम कमनीयतरं
बरमम्बरं च नृवरोऽर्पितवान् ॥ २१ ॥

भगवत्प्रसादमधिगम्य ततः
पटतल्लजद्वितयमादरतः ।
महते महीरमणमौलिरदा-
दधिकारिणेऽधिकमतोऽप्यपरम् ॥ २२ ॥

शुभकर्मसंततिमदभ्रधनं
प्रतिपाद्य सादरमिहादधता ।
वसुधाधिपेन बहुधापि तदा
विशदा व्यधायि निजधार्मिकता ॥ २३ ॥

अवनीपतिर्बहु धनं वितर-
न्नधिनोद्वनीपकनिकायमयम् ।

---

१ सज्जीकृतम्. २ परिशुद्धः. ३ अर्पितोपहारः. ४ देवालयाधिकर्त्रे. ५ पटतल्लजाद्वितयात्.

अभिवृष्य [1]जीवनमनल्पतरं
तरसेव चातककुलं जलदः ॥ २४ ॥

नळरामधर्मजवदन्ये[2]युगे-
ष्विह पुण्यकीर्तिरयमेक इति ।
मतिमातनोत् तनुमताममितै-
रतिमानुषः क्षितिपतिः स्वगुणैः ॥ २५ ॥

[3]भुजगेन्द्रभूधरसदेशजुषा-
मयमाशिषा शुभविशेषपुषा ।
अतिनिर्वृतिं दधदि[4]तैश्चलितः
[5]प्रतिकृष्णमध्वनि निशामनयत् ॥ २६ ॥

पृथिवीभुजोऽ[6]पचितिमारचय-
न्नथ तत्रतत्र यवनप्रवराः ।
पथि हैदराख्यविषयाधिपते-
रधिकारिणः पृतनयानुगताः ॥ २७ ॥

[7]उपकृष्णमाप नृपमौलिरसा-
वपरह्युरम्बरमणावुदित ।
शिबिरं न्यवीविशदथापजले
सरितस्तले सि[8]कतिले विपुले ॥ २८ ॥

ननु [9]कृष्णयानुचितमाचरितं
यदजातशत्रुमपि [10]धर्मभुवम् ।
अधिगत्य [11]नीरसिकतास्पदता
कलिता [12]क्लेशकुलमौलिममुम् ॥ २९ ॥

१ जलम्. २ कृतत्रेताद्वापरेषु. ३ शेषाद्रिसमीपवासिनां जनानाम्. ४ शेषाद्रेः. ५ कृष्णां नदीं प्रति. ६ पूजाम्. ७ कृष्णाया नद्याः समीपे. ८ सिकताशालिनि. ९ द्रौपद्या नद्या च. १० धर्मपुत्रं धर्मावासस्थानं च. ११ अरसिकत्वास्पदत्वं जलसैकतस्थानत्वं च. १२ चन्द्रवंशावतंसं विद्वत्कुलश्रेष्ठं च.

दिनमत्र नित्यनिजकृत्यशतै-
रनयत् कृतानतिरिहत्यजनैः ।
निशि निर्गतः पुनरितः पृथिवी-
पतिपुङ्गवः प्रति पुनानगरम् ॥ ३० ॥

बहुयोजनैर्जनपदैरयन
विपुलं विलङ्घ्य विपुलावलभित् ।
गगनाग्रगाहिनि दिनाधिपता-
[1]वपुनात् पुनां स्वगमनादमनाक् ॥ ३१ ॥

बहुभिः सुधीभिरभिगम्य ततो
बहुमानितो वसुमतीरमणः ।
चतुरः पुरोदरमसावविशा-
[2]च्चतुरश्वयुग्यमधिरुह्य रथम् ॥ ३२ ॥

उपगम्य [3]सार्वजनिकाख्यसभा-
मपराह्ण एष नृपमौलिमणिः ।
उपचारपत्रमनया विनया-
दुपदीकृतं सकरुणं [4]जगृहे ॥ ३३ ॥

परिषद्वरिष्ठपुरुषेरितया
स्वयशःप्रशास्तकृदुदारगिरा ।
परितोषितोऽत्र[5] सचिवेन नृपः
सदृशं तदुत्तरमवाचयत ॥ ३४ ॥

तत एष गायनसमाजगत-
स्ततमुख्यवाद्यनिनदानुगतम् ।
[6]अदसीयगानमनवद्यतरं
निशमय्य निर्भरमधत्त मुदम् ॥ ३५ ॥

---

१ पुनाति स्म. २ चतुरवयवा अश्वाश्चतुरश्वास्ते युग्या युगवाहिनो यस्मिंस्तम्. ३ सर्वजनहिताख्यसभाम्. ४ स्वीकृतवान्. ५ सभायाम्. ६ गायनसमाजसंबन्धि.

उचितार्थमुत्तरमुदीर्य नृपः
सचिवेन तत्परिषदो भणितैः ।
नितराममूमुददमूममितं
वितरन्नयं तदनु वित्तचयम् ॥ ३६ ॥

द्रविणव्ययं विविधधर्मकृते
बहुलं विधाय वसुधाधिपतिः ।
अधिरुह्य भूमरथवर्यमित-
श्चलितोऽपरेद्युररुणे तरुणे ॥ ३७ ॥

अथ पर्वतोदरदरीसरणी-
र्धरणीपतिः कुतुकितो नितराम् ।
अतिलङ्घ्य शीघ्रमुपमुम्बमगा-
च्चरमाचलं भजति भानुमति ॥ ३८ ॥

इह माधवः स महनीयमतिः
सह पौरजानपदहूणवरैः ।
महतादरेण सुहृदं नृपतिं
सहसा सभाजयितुमभ्यगमत् ॥ ३९ ॥

अवलोकनाय मिळितानखिलान्
कुशलोक्तिभिः समभिनन्द्य ततः ।
नगरोत्तमान्तरविशत् स विशा-
मधिपोऽधिरूढचतुरर्वरथः ॥ ४० ॥

अधिगम्य हर्म्यमथ रम्यतमं
क्षितिवासवो निजवसत्युचितम् ।
परितुष्टपौरपरिषत्प्रवरै-
र्वरिवस्यते स्म नुतिसूक्तिकरैः ॥ ४१ ॥

१ मोदयति स्म. २ पारिषदम्. ३ मुम्बापुरसमीपम्. ४ पूज्यते स्मेत्यर्थः.

उचितं ततः प्रतिवचोऽभिदधद्
विबुधव्रजं तमधिनोदभिकम् ।
नृपतिर्गृहीतकुसुमोपहृति-
र्मुदितोऽन्वमंस्त गमनाय पुनः ॥ ४२ ॥
अपतैलवर्ति परितो निलयं
ज्वलितेन दीपपटलेन तदा ।
परमाद्भुतप्रसृमरद्युतिना
क्षितिनायकश्चमदकारितराम् ॥ ४३ ॥
उषसि क्षितिक्षिदितरेद्युरितः
सरितामधीशितुरवाप्य तटम् ।
सविधस्थिता बहुविधा महतीः
प्रविशन्नवैक्षत समुद्रतरीः ॥ ४४ ॥
सुचिरं परीक्ष्य तरणीर्धरणी-
पुरुहूत एत्य पुनरावसथम् ।
विहिताप्लवादिनिजकृत्यशतः
समसेवि माधवमुखैर्विबुधैः ॥ ४५ ॥
अथ पाण्डुरङ्गसुधिया सहितः
प्रथितानि तत्र नगरप्रवरे ।
विविधस्थलानि नृपतिः कुतुका-
दवलोकयन्नयमनेष्ट दिनम् ॥ ४६ ॥
वसतावथास्य दिवसावसितौ
परिचर्ययोत्सुकतरैर्मिळितैः ।
नवनृत्यगीतकलनानुगतं
विदधे सभाजनमनेकजनैः ॥ ४७ ॥

---

१ अप्रीणयत्. २ ज्वलनक्रियाविशेषणमिदम्. ३ Gasilluminations. ४ अतिशयेन चमत्कृतः. ५ 'प्रसितोत्सुकाभ्याम्--' इति तृतीया. ६ कर्मणि लिट्.

विषयस्य तस्य भरणेऽधिकृतं
प्रभुमैक्षत क्षितिभृदन्यदिने ।
अचिरप्रमीतदयिताविरह-
व्यथमानमानसमुपेत्य रहः ॥ ४८ ॥

प्रतिगच्छदात्मवसतिं जगती-
पतिरत्नमापणमतिप्रथितम् ।
अबलाजनाध्ययनशालमपि
प्रविशय्यलोकत कुतूहलतः ॥ ४९ ॥

मतिमानसावनलसाग्रसरो
महदासदत् तदनु यन्त्रगृहम् ।
सततभ्रमद्वितनतचक्रशत-
व्यतिमर्दजध्वनिनिरन्तरितम् ॥ ५० ॥

अधिकारिसंसदुपचारगिरो
रचितोत्तरोऽथ नृवरो मुमुदे ।
कचनोतिकर्म वचनातिगत-
स्यदतः प्रवर्तितमिहाकलयन् ॥ ५१ ॥

परितर्प्य तन्निलयकर्मकरान्
वसुभिस्ततो वसुमतीरमणः ।
अपि निष्कनिष्कलनरीतिमसा-
वपरत्र सद्मनि समीक्षितवान् ॥ ५२ ॥

गतवानथ प्रधननावमितः
पृथिवीपतिः पृथुतरामुदधौ ।
बधिरीकृताशमशृणोन्नलिक-
ध्वनिमैक्षतापि भटकूटमृधम् ॥ ५३ ॥

---

१ The Governor of Bombay. २ राजश्रेष्ठः. ३ ऊतिकर्म'तन्तुसन्तानशिल्पम्. ४ वचनातिगतेत्युक्त्या वेगस्य परा काष्ठा प्रतिपाद्यते. ५ दीनारनिर्माणरीतिम्. ६ प्रधनं युद्धं तदर्थां नावम्. ७ भटानां मृषायुद्धम्.

अथ पोत[1]वाहनिवहाय धनं
क्षितिपो वितीर्य मुदितो नितराम् ।
प्रतिजग्मिवानतिगतो विपणिं
स[2]त[3]टित्प्रदीपघृणिमावसथम् ॥ ९४ ॥

विहिताशनो निशि विशाखनृपः
सचिवेन्द्रमाधवनिमन्त्रणया ।
सदनं किमप्यनुपमानमगा-
द्रुचिरप्रदीपरुचिरम्यतमम् ॥ ९५ ॥

अथ समुपगताभिस्तत्र तन्नानगर्याः
सुरयुवतिसमाभिः सुन्दरीभिः प्रयुक्तम् ।
युवजनधृतिचोरं नृत्यगीतप्रकारं
नरपतिरनुभूय प्राप हर्षप्रकर्षम् ॥ ९६ ॥

तदनु शबलिताशाकाशमाविष्कृतानि
क्षितिपतिरतिरम्याण्य[4]ग्निकर्माणि पश्यन् ।
अखिलपुरुषवर्यैरत्र मुम्बानगर्यां
कृतवसतिभिरव्याजादरादारराधे ॥ ९७ ॥

सीमातिगप्रमदभारतरङ्गितेन
श्रीमाधवेन गुरुणा[5] गुरुणा[6]दरेण ।
सम्भावितः कुसुमदाम समर्प्य भूमी-
जम्भाहितः प्रतिजगाम ततः स्वधाम ॥ ९८ ॥

भूयोऽपि भूवलभिदेष जनोपकार-
माधाय भूरिधनभारसमर्पणेन ।
आपृच्छ्य माधवमुखानपरेद्युराशा-
नारूढधूमशकटप्रवरः प्रतस्थे ॥ ९९ ॥

---

१ सांयात्रिकसमूहाय. २ विद्युन्मयदीपकान्तिसहितम्. ३ Electric light. ४ Fire-works. ५ हूणविद्योपदेष्ट्रा. ६ महता.

भूपः प्राप स नासिकाख्यनगरस्योपान्तमस्तोन्मुखे
भानौ पर्वतगर्भकृत्रिमदरीमार्गानतीत्यापरान् ।
दृष्टो हृष्टतरैर्जनैरथ रथारूढः पुराभ्यन्तरं
प्राप्तो मन्दिरमावसत् किमपि तच्छ्रीकृप्रतल्लप्रभोः ॥ ६० ॥

अस्नासीदखिलाघलाघवकरे गोदावरीवारिणि
क्षोणीजानिरितस्तु निर्जिगमिषुस्तत्राशु रात्रावयम् ।
द्रष्टुं पञ्चवटीतपोवनमुखानत्रत्यपुण्याश्रमान्
नाशक्नोदथवा निषेवितचरास्ते खल्वनेनैकदा[2] ॥ ६१ ॥

ततो भुक्त्वा नक्तं नरपरिवृढो धूमशकटं
पुनश्चारूढोऽयं सरणिमतिलङ्घ्याशु महतीम् ।
दिनारम्भेऽन्येद्युः पुरमुपगतः खाण्डवमभू-
न्मुदा प्रत्युद्यातः प्रकृतिभिरधीकारिभिरपि ॥ ६२ ॥

अथायातः सौधं निजवसतये सज्जितमसा-
ववोचत् पौरोक्तेर्नृपतिरपराह्णे प्रतिवचः ।
[3]महाराजस्यैतज्जनपदधुरीणस्य सचिवात्
सपर्यामर्यादामलभत च सायाह्नसमये ॥ ६३ ॥

[4]स्वज्येष्ठप्रेष्ठमित्रक्षितिपतिवृषभप्रेषितं प्रेमपत्रं
प्रीत्या स्वीकृत्य तस्योत्तरमथ तदमात्यस्य हस्ते प्रदाय ।
पौरैरभ्यर्थितस्तद्घटितपटकुटीमेत्य दृष्टाग्निकर्मा
धीरः श्रीरामवर्मावनिवलमथनः खाण्डवान्निर्जिहीण्डे ॥ ६४ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।

---

१ Kuppurtalla Raja. २ त्रेतायुगे. रूपकमिह व्यङ्ग्यम्. ३ Holkar. ४ स्वज्येष्ठस्य आश्लेषर्क्षजरामराजस्य प्रेष्ठमित्रं यः क्षितिपतिवृषभो राजश्रेष्ठस्तेन प्रेषितम्.

शेषाद्रिश्रितशेषशायिशरणस्तोत्रास्ततृस्तो भृशं
शस्तः शास्त्रविदस्त्रयोदश उपारंस्तास्य सर्गः कृतौ ॥ ६९ ॥

इति श्रीविशाखविजये त्रयोदशः सर्गः



## चतुर्दशः सर्गः

श्रीमान् विशाखावनिवृक्णशात्रवो
द्राघीयसीं द्रागतिगत्य वर्तनीम् ।
अन्येद्युरभ्यागतवानहर्मुखे
ख्यातं पुरं[1] मेकल[2]कन्यकान्तिके ॥ १ ॥

प्रालेयजालेन समावृतास्तदा
प्राभातिकेन[3] प्रचकाशिरे दिशः ।
प्राज्ञावतंसस्य विशाखभूपतेः
प्राज्यै[4]र्यशोभिर्विशदीकृता इव ॥ २ ॥

नीहारधारानिबिरीसमारुत-
व्यातोदशीतोदयदुत्कटव्यथैः ।
भूवासवोपासिभिरेतदर्पिता
जीवातवो[5]ऽमानिषता[6]त्र कम्बळाः[7] ॥ ३ ।

केनापि सेनापतिना[8]न्वितस्ततः
स्वावासमासाद्य शताङ्ग[9]मास्थितः ।
आनन्दयामास नृपेन्दुरागता-
नालोकनानुग्रहमीप्सतो जनान् ॥ ४ ॥

निर्वर्त्य पौर्वाह्णिककृत्यमञ्जसा
निस्तन्द्रशीलस्तत एत्य नर्मदाम् ।

---

१ Jubbulpore. २ नर्मदासमीपे. ३ औषसिकेन. ४ प्रचुरैः. ५ 'जीवातुर्जीवनौषधम्' इत्यमरः. ६ मानिताः. ७ नीशाराः. ८ Colonel Grace. ९ रथम्.

स्नात्वा मरुत्वानवनेस्तदम्भसि
प्राज्येन वित्तेन जनानतर्पयत् ॥ ५ ॥

यस्याः पुरापूजयदुत्तरे तटे
क्षेत्रे पवित्रे भृगुकच्छनामनि ।
वैरोचनिर्वामनमश्वमेधकृत्
तां पूर्वगङ्गां मतिमानमानयत् ॥ ६ ॥

सा कार्तवीर्यार्जुनकीर्तिसाक्षिणी
माहिष्मती यत्र पुराभवत् पुरी ।
रेवातटप्रान्तभुवं विशाखरा-
डेक्षामवैलक्ष्यमवेक्षते स्म ताम् ॥ ७ ॥

कूलद्रुजालात् पतयालुभिः सुमै-
र्व्याकीर्णपुष्पाञ्जलिरुल्लसद्रसा ।
सोमोद्भवा भूतलशीतलद्युते-
रामोदसीमोदयमादधेऽस्य सा ॥ ८ ॥

शालामथोच्चावचशिल्पशिक्षिणा-
मालोक्य हृष्टः सचिवान्वितो नृपः ।
स्वातिथ्यकृद्गोकुलदासवासगः
संमान्य तं नक्तमितो विनिर्गतः ॥ ९ ॥

अध्यध्वमिद्धादरमेत्य मानितो
दोषांपि तत्तद्विषयाधिकारिभिः ।

१ महाबलिः. इयं च कथा श्रीभागवते द्रष्टव्या. २ अनल्पाश्चर्यं यथा तथा. ३ उल्लसज्जला उल्लसदनुरागा च. ४ महीचन्द्रस्य राज्ञः. ५ कृतवती, चन्द्रोद्भवायाश्च चन्द्रमोदाधायकत्वसङ्गतिः. ६ The School of Industry. ७ 'उच्चावचं नैकभेदम्' इत्यमरः. ८ स्वस्य आतिथ्यकृद्यो गोकुलदासः तन्नामकः श्रेष्ठी, तस्य वासं गृहं गच्छतीति तथा. ९ अध्वनि. १० रात्रावपि.

पृथ्वीपतीनां प्रवरः परेद्यवि[1]
प्रातः प्रयागं[2] प्रयतः[3] प्रपन्नवान् ॥ १० ॥

आराधितो हूणवरेण[4] भूपति-
र्धीराग्रतंसो नगरीं प्रविश्य ताम् ।
वाराणसीं[5] भूरमणोपकारिकां[6]
सूरात्मजातीरगताम्[7] उपेयिवान् ॥ ११ ॥

यत्तीरवानीरनिकुञ्जसद्मभिः
साक्षात्कृता यत्पुलिनाङ्गणैरपि ।
राधामधुध्वंसिरहस्यकेळयः
सालोकि सौधा[8]द्यमुनामुना[9] मुदा ॥ १२ ॥

काळाञ्जनग्रावकराळकाळिय-
व्याळाधिपक्ष्वेळामिळज्जलाविला ।
नीला किमाभाति कळिन्दनन्दने-
त्युत्प्रैक्षि किं न क्षितिरक्षिणा तदा ॥ १३ ॥

भागीरथीसूर्यसुतासरस्वती-
सम्भेदमेत्य[10] क्षितिजम्भभेदिना ।
सस्ने[11] त्रिवेण्यामथ पुण्यपाथसि
ध्वस्तैनसा[12] निस्तुलधर्मकर्मभिः ॥ १४ ॥

श्रुत्वा विशाखं श्रुतशीलशालिनं
सम्प्राप्तमल्पीकृतकल्पपादपम् ।

१ परस्मिन्दिने. २ Allahabad क्षेत्रविशेषम ३ पारशुद्धः. ४ The Commissioner. ५ काशीराजसौधम्. ६ The Maharaja of Benares. ७ यमुनातटगताम्. ८ सौधमारुह्य. ल्यब्लोपे पञ्चमी. ९ श्रीविशाखेन. श्रीकृष्णस्य यमुनाकूले रहःकेलयो गीतगोविन्दादिषु प्रसिद्धाः. १० गङ्गायमुनासरस्वतीसङ्गमम्. ११ स्नातम्. भावे लिट्. १२ ध्वस्तपापेन.

वङ्गक्षितीशं शतशः समागता
वाञ्छातिगं प्रापुरकिञ्चना धनम् ॥ १५ ॥
पुंसां पुरोगः पुरु वित्तमुत्सृजन्
पुण्यस्थले तत्र पुराणविश्रुते ।
पुष्टाभिराशीभिरपूजि पूरुषैः
पूर्णप्रमोदार्णवपूरसंप्लुतैः ॥ १६ ॥
कृत्स्नानि कृत्यानि कृशेतरादरं
मुख्येन कल्येन विधाय तत्र सः ।
धाम स्वमागत्य जगत्यधीश्वरो
यामावशेषे दिवसेऽभ्यवाहरत् ॥ १७ ॥
वीतप्रमीलोऽथ विशाखभूपति-
र्विख्यातमेतद्विषयाधिकारिणम् ।
हूणाधिपं तद्गृहमेत्य दृष्ट्वा-
नैक्षिष्ट सोऽप्येनमिदंगृहागतः ॥ १८ ॥
नानाविधानत्र विचित्रशिल्पकान्
क्रीत्वा पदार्थान् कृतभोजनो निशि ।
सज्जीकृतं धूमरथोद्धमास्थितः
पृथ्वीपतिः प्रस्थितवान् प्रयागतः ॥ १९ ॥
काल्येऽपरेद्युः कलिकल्मषापहां
काशीं यदागच्छदतुच्छकौतुकम् ।
कल्यो विशाखः फलिताभवत् तदा
कालाच्चिरादुत्कलिकालतास्य सा ॥ २० ॥

१ दरिद्राः. २ श्रेष्ठ इत्यर्थः. ३ आहारमकरोत्. ४ Sir George Couper, the Lt. Govr. ५ विशाखभूपतिम्. ६ अस्य विशाखभूपतेर्गृहागतः. ७ धूमशकटश्रेष्ठम्. ८ दक्षः. ९ उत्कलिका उत्कण्ठैव लता. उद्गतः कलिकालमुत्कलिकालः, तस्य भावस्तत्ता च. १० विशाखस्य.

क्षोणीपतिस्तद्विषयाधिकारिणा[1]
हूणाधिपेन प्रतिपादितार्हणः ।
गच्छन् निकेताय रथस्थितः पथि
स्फीतादरं जह्नुसुतामवैक्षत ॥ २१ ॥

वैकुण्ठपादाब्जनखत्विषा भृशं
श्रीकण्ठशीर्षेन्दुरुचा च पाण्डुरा ।
मूर्त्तेव जागर्ति भगीरथस्य या
कीर्तिर्धरित्रीरमणो ननाम ताम्[2] ॥ २२ ॥

नौकानिकायैः कलितेन वर्त्मना
तीर्त्वाथ धात्रीभृदमर्त्यनिम्नगाम् ।
काशीमहीशस्य निवासमासदत्
तत्रासिघट्टं[3] समयात्मसात्कृतम्[4] ॥ २३ ॥

घट्टेऽत्र कल्मषाप्लवनो महीपति-
स्त्रिस्रोतसोऽन्यं मणिकर्णिकाभिधम् ।
नावा[5] गतोऽत्रत्यपुरोधसाञ्जसा
सम्भावितोऽनीयत चक्रकुण्डकम्[6] ॥ २४ ॥

निर्वर्त्य तत्राभिषवं यथोदितं
भूयोऽपि भूपो मणिकर्णिकागतः ।
मध्येनदं[7] नौघटितामधिष्ठितो
द्रोणीमतानीत् पुनराप्लवादिकम् ॥ २५ ॥

विश्वेश्वरस्याथ विशाखरामराट्
प्रासादमान्दोलिकयाससाद सः ।

१ Local Commissioner. २ गङ्गाम्. उत्प्रेक्षालङ्कारः. ३ असिघट्टं समया असिघट्टाख्यतीर्थविशेषस्य समीपे, 'अभितःपरितः' इत्यादिना द्वितीया. ४ स्वायत्तीकृतम्. ५ करणेन. ६ तीर्थविशेषम्. ७ नद्या मध्ये, 'नदीपौर्णमास्याग्रहायणीभ्यः' इति टच् समासान्तः.

[1]तद्देशवेषव्यतिरिक्तकेवल-
क्षौमोपसंव्यानविशेषपेशलः ॥ २६ ॥

भूयांस्यकुप्यानि[2] धनान्युपायनी-
चक्रे सपीताम्बरभूषणानि[3] सः ।

श्रीविश्वनाथस्य पदारविन्दयो-
र्दत्तार्चनः[4] काञ्चनबिल्वपल्लवैः[5] ॥ २७ ॥

आचर्य तत्राचरणीयमादरात्
सर्वं तदुर्वीरमणो यथागमम्[6] ।

भूयः स्वमावासमवाप्य भुक्तवा-
नम्भोजबन्धावपराचलोन्मुखे ॥ २८ ॥

तत्रापरेद्युः शिवरात्रिसम्भवा-
द्धात्रीमरुत्वानतिमात्रमात्तमुत् ।

सायं समारुह्य स[7] नावमागतः
केदारघट्टे शिपिविष्टमानमत् ॥ २९ ॥

आशीविषाङ्कं भगवन्तमर्चितुं
काशीनृपस्तत्र समागतस्तदा ।

भूशीतभानुं नळरामधर्मभू-[8]
देशीयमाश्लिष्ट विशाखमादरात् ॥ ३० ॥

क्षेत्रेऽविमुक्ते[9] शिवभक्तशेखरो
यत् तत्र रात्रिं नियतव्रतः शिवाम् ।

अग्रेसरो भूमिभुजामजागरी-
दल्पेतरं तत्फलमीर्यते कथम् ॥ ३१ ॥

१ तान्त्रिककर्मानुष्ठानाय तद्देशवेषं परिहृत्य गृहीतक्षौमोपसव्यानमात्र इत्यर्थः. २ स्वर्णरूप्यात्मकानि. ३ पीताम्बरभूषणसहितानि. ४ दत्तपूजः. ५ सौवर्णबिल्वदलैः. ६ आगममनतिक्रम्य. ७ शिवम्. ८ नलरामयुधिष्ठिरतुल्यम्. ९ गङ्गापश्चिमतटस्थक्षेत्रविशेषस्य अविमुक्तमिति नाम.

आदित्यनद्यामपरेद्युराप्लुतः
　श्रीमानमापुण्यतिथौ प्रगेतराम् ।
सर्वान् समुद्दिश्य पितॄन् महीपतिः
　श्राद्धं विधत्ते स्म सुधीर्यथाविधि ॥ ३२ ॥

अष्टापदाङ्काधिकपुष्टरोचिषां
　पट्टाम्बराणां पटलीरनेकशः ।
अक्रैष्ट तत्रेष्टजनार्पणेच्छया
　भूषाविशेषांश्च स एष भूवृषा ॥ ३३ ॥

वाराणसीभूवलसूदनो मुदा
　साकं जयन्तप्रतिमेन सूनुना ।
दिक्पालकल्पैः सचिवैः समन्वितः
　सेवां विशाखस्य विधातुमाययौ ॥ ३४ ॥

सारस्यसारैरुचितैर्मिताक्षरैः
　सन्तोष्य तं सल्लपितैः स रामराट् ।
अन्यानपि प्रेक्षणकाङ्क्षिणो जना-
　नन्यूनमानन्दयदभ्युपागतान् ॥ ३५ ॥

श्रीवञ्चिभूभृत्कुलशेखरस्ततः
　काशीनरेन्द्रस्य निकेतनं गतः ।
संमोदमुच्चैरभजत् सभाजित-
　स्तेनोपचारैरुचितैरनेकधा ॥ ३६ ॥

संख्यावतां तत्पुरवर्यवासिनां
　सायं समाहूय समाजमादृतः ।
शास्त्रीयवादैर्विविधैर्बुधाग्रणी-
　र्धात्रीभृदप्रीयत तत्प्रवर्तितैः ॥ ३७ ॥

१ गङ्गायाम्.　२ अतिप्रातः.　३ क्रीतवान्.　४ राजा.　५ काशीभूशक्रः.
६ राज्ञो, गुहस्येति च प्रतीयमानोपमा.　७ सारस्येन सरसतया सारैः श्लाघनीयैरित्यर्थः.
८ पण्डितानाम्.

स्फारद्युतस्फाटिकदीपसंहति-
ज्योतिस्ततिद्योतिवितानमण्डलाम् ।
शालां गतः पण्डितषण्डमण्डिता-
मेतद्वितण्डामश्रृणोद्विशाखराट् ॥ ३८ ॥
तत्राधरात्रावधि सावधानधी-
राकर्णयन् कोविदसंसदो गिरः ।
प्रीतः प्रकामं पृथिवीपतिर्धनं
प्रायच्छदस्यै प्रचुरं हिरण्मयम् ॥ ३९ ॥
श्रीवञ्चिभूपञ्चशरोऽधिजाह्नवि
स्नात्वेतरेद्युस्त्वरितं कृताशनः ।
स्वासन्निधौ ह्यः स्वगृहागतं नृपं
प्रेम्णा गतस्तद्गृहमैक्षतापरम् ॥ ४० ॥
नानोपचारैरथ तेन मानितो
यूनाप्यनूनप्रतिभेन भूभृता ।
धीमानसावाहितसत्क्रियो जनै-
र्भूमानसा प्रस्थितवान् गयां प्रति ॥ ४१ ॥
अध्यारुरुक्षावरविन्दबान्धवे
मध्य दिवो मध्यमलोकपालकः ।
प्रस्थाय काश्याः प्रथितान्वयोद्भवौ
प्रैक्षिष्ट हृष्टः पथि हूणपुङ्गवौ ॥ ४२ ॥
सायं गयां सोऽयमुपेत्य सादरं
सम्भावितोऽदोविषयाधिकारिणा ।

१ पण्डितषण्डवितण्डाम्. २ अर्धरात्रोऽवधिर्यस्मिन् कर्मणि तत्तथा. ३ गङ्गायाम्. ४ The Maharaja of Vizianagaram. ५ कृतसत्कारः. ६ अध्यारोढुमिच्छौ. ७ At Bankipore H. H. met Mr. Metcalfe, the local Commissioner (Nephew of the great Sir Charles Metcalfe) and Major Havelock (Son of the great Sir Henry Havelock).

पूर्वेक्षितेहत्यपुरोहितार्थितो
वासाय तत्सौधमगात् प्रसाधितम् ॥ ४३ ॥
तत्र-प्रणीताप्लवनोऽधिफल्गुनि
द्राक् फल्गुनाभोऽयमफल्गुसद्गुणैः ।
सन्ध्यामुपास्याभ्यवहृत्य यात्रया
श्रान्तो विशश्राम निशां विशाम्पतिः ॥ ४४ ॥
निर्वर्त्य तत्र क्षितिपालशेखरः
श्राद्धं हिरण्योपपदं परेद्यवि ।
विश्वश्रुतं विष्णुपदं गतस्ततः
पित्र्यं वितेनेऽत्र च विप्रभोजनम् ॥ ४५ ॥
सौवर्णनिष्कैश्चषकैश्च राजतैः
सन्तर्प्य तान् पञ्च गयापुरोहितान् ।
पट्टैः परार्ध्यैरपि मृष्टमाशितान्
प्रासादमुच्चैरविशद्विशाखराट् ॥ ४६ ॥
पूर्णोपचारामिह पूरुषाग्रणीः
पूजां विधायाकृतपुण्यदुर्लभाम् ।
पिण्डप्रदो विष्णुपदेऽथ दक्षिणां
दत्वालयं प्रत्यगमत्पुरोधसे ॥ ४७ ॥
अन्येद्युरुद्यत्यहिमद्युतावितो
गत्वा रथेन क्षितिपोऽक्षयं वटम् ।
तत्संनिकृष्टेषु शिलोच्चयेष्वट-
न्नालोकत प्राकृतरामणीयकम् ॥ ४८ ॥
चित्रीयमाणश्चरणं चमत्कृते-
रुत्पादकं तत्र विचित्रमैक्षत ।

१ Gayaval Chote Lal. २ अलंकृतम्. ३ फल्गुनीनद्याम्. ४ अर्जुनतुल्यः. ५ अत्यन्तसंयोगे द्वितीया. ६ विष्णुपदे. ७ पानपात्रैः. ८ श्रेष्ठैः. ९ पर्वतेषु. १० प्रकृतेरिदं प्राकृतम्. Beauty of Nature. ११ शिलायामुट्टङ्कितं पादम्.

धात्रीपतिः प्राक्तनदेवनागरी-
लिप्या किमप्यालिखितापदानकम् ॥ ४९ ॥

प्रत्यागतो वेश्म विशाखभूपतिः
स्नानादिकृत्यं निरवीवृतत् ततः ।
सम्भोज्य च श्राद्धविधौ गयाद्विजान्
भूयोऽप्ययासीदयमक्षयं वटम् ॥ ५० ॥

पिण्डार्पणं तत्र पितृप्रियावहं
प्रीत्या वितत्य प्रथमानया प्रभुः ।
आनन्दयामास गयापुरोधसा-
मध्यक्षमष्टापदरूप्यवृष्टिभिः ॥ ५१ ॥

पुत्रेण मैत्रा समुपेत्य सादरं
तेनापरेद्युः प्रतिपादितोपदः ।
ताभ्यां प्रदायोचितपारितोषिकं
धूमानसः स्थानमगात् तदन्वितः ॥ ५२ ॥

प्रस्थाय पौरप्रवरैः कृतार्हणः
प्रेष्ठोऽनुमध्याह्नमितः क्षितिक्षिताम् ।
प्रापापराह्णे नगरीं गरीयसा
वेगेन दूरादपि पत्तनाभिधाम् ॥ ५३ ॥

प्रत्युद्गतस्तत्र पुराधिकारिणा
हूणप्रधानेन बुधाग्रतःसरः ।
ओढ्येन केनापि निजं निकेतनं
निन्ये रथेनोपवनोपकण्ठगम् ॥ ५४ ॥

---

१ आलिखितवृत्तान्तम्. २ निर्वर्तितवान्. ३ कृत्वा. ४ सुवर्णरजतवर्षैः. ५ सह. ६ गयापुरोहिताध्यक्षेण. ७ दत्तोपहारः. ८ पितापुत्राभ्याम्. ९ अग्रगामी. १० मध्याह्ने. ११ Mr. Smith, Inspector of Police. १२ Mr. Girdharlal, the local banker.

धात्रीमहेन्द्रोऽत्र परीक्ष्य कांश्चन
 क्रीत्वा पदार्थानपरत्र दुर्लभान् ।
भुक्त्वा त्रि[1]यामामुख एव निर्यया-
 वध्यासितो धू[2]मशताङ्गतल्लजम् ॥ ९५ ॥

तां कै[3]लिघट्टाख्यपुरीमतल्लिका-
 मासेदिवांसं समया परेद्यवि ।
प्रातर्विशाखाविनपाकसूदनं
 प्रत्युद्ययुर्भारतभर्तृपूरुषाः ॥ ९६ ॥

सज्जीकृतं तत्र स भा[4]रतप्रभो-
 रारुह्य भूजानिरथो रथोत्तमम् ।
आसेवितो वङ्गतुरङ्गवाहिनी-
 भागेन वेगान्निजगेहमभ्यगात् ॥ ९७ ॥

मार्गे म[5]हापोतसहस्रकूपक-
 स्तोमैरुदग्रैर्निबिडीकृतान्तराम् ।
रोमाञ्चिताङ्गीमिव भर्तृ[6]सन्निधे-
 र्भूमीभृदैक्षिष्ट स[7]मुद्रवल्लभाम् ॥ ९८ ॥

नानापदा[8]नैर्जनभव्यसाधनैः
 कल्पावधिस्थायि यशोऽधिजग्मुषाम् ।
हूणप्रभूणां प्र[9]तियातनाश्च स
 प्रत्यक्षयामास सुशिल्पिकल्पिताः ॥ ९९ ॥

प्राप्य स्ववासं क्षितिवासवः कृत-
 स्नानादिकृत्यः क्षणमात्तविश्रमः ।

१ प्रदोषे. २ धूमरथश्रेष्ठम्. ३ Calcutta. समयाशब्दयोगे द्वितीया. ४ The Viceroy's staff. ५'यानपात्रे शिशौ पोतः' इति, 'कूपको गुणवृक्षकः' इति चामरः. ६ समुद्रसांनिध्यात्. ७ गङ्गाम्. The Hoogly. ८ Lords Canning, Lawrence, Mayo, and Sir James Outram. ९ प्रतिकृतीः.

भूयोऽपराह्णे पुरवर्यमापण-
श्रेणीसमीक्षाकुतुकेन पर्यगात् ॥ ६० ॥

[1]संरुद्धसत्त्वप्रकरं परेद्यवि
प्रत्यूष एत्य प्रतिपन्नकौतुकः ।
आराममस्तोपमरामणीयकं
श्रीरामवर्मक्षितिभृद्‌[2]व्यभालयत् ॥ ६१ ॥

हूणप्रभुं [4]भारतचक्रवर्तिनी-
स्थानीयमालोकितुमेतदालयम् ।
तत्रापराह्णे पुनराप भूपतिः
साकं स्वकीयैः सचिवात्मजादिभिः ॥ ६२ ॥

तत्पूरुषैर्हूणवरैस्तदाज्ञया
स्वावासमेत्य क्षितिपाकशासनः ।
तच्चक्रयानप्रवराधिरोपितो
नि[5]न्ये तदास्थाननिकेतनं द्रुतम् ॥ ६३ ॥

प्राकारोत्थखधूमभीमनिनदव्याप्तान्तरिक्षान्तरं
प्राप्तो भारतभर्तृसौधसविधं श्रीवाञ्चिभूवज्रभृत् ।
सेनाभिर्बहुमानितः समुचिताचारेण सिंहासना-
गारं चारुतरं [6]तदीयसचिवप्रत्युद्गतः प्राविशत् ॥ ६४ ॥

भर्ता भारतमण्डलस्य महिताद् भद्रासनादुत्थितः
प्रत्युद्गत्य करप्रदोऽकृत धराजम्भारिसम्भावनाम् ।
तत्तादृक्परमोन्नतिं कलयतोर्विख्यातवैदुष्ययो-
र्भूयोऽभू[7]दुभयोः क्षणं प्रणयिनोर्विस्रम्भसम्भाषणम् ॥ ६५ ॥

स्थेयोभिः स्वगुणोत्करैर्वसुमतीनाथः स तस्य प्रभोः
प्रेमाणं प्रबलं निबध्य बहुमानोत्तानिते मानसे ।

१ परिगतः. २ पञ्जरनिरुद्धसिंहादिप्राणिजातम्. ३ दृष्टवान्. ४ भारतचक्रवर्तिनीप्रतिनिधिम्. The Viceroy, the most Noble the Marquis of Ripon. ५ नीतः. ६ भारतभर्तृसचिवप्रत्युद्गतः. ७ भारतभर्तृविशाखभूपयोः.

ताम्बूलाद्युपचारमादरभरेणादाय तत्भावितं
निष्क्रान्तोऽथ विचित्रवस्तुनिचितां शालामवालोकत ॥ ६६ ॥
नक्तं भुक्तवता नराधिपतिना तेनास्य नाट्यालयं
दृष्टं धृष्टनटाभिनीतमभिरूपार्थं ततो रूपकम् ।
अन्येद्युश्च विपश्चितामचरमेणारभ्य सूर्योदया-
दन्यद् दृश्यमशेषमात्मनिलये सायाह्ने सोऽपि प्रभुः ॥ ६७ ॥
तद्देशोद्दामशैत्यात् कतिपयदिवसानामयावी पुरैव
श्राम्यन्नश्रान्तमेवं पुनरजहदपथ्यावगाहादिकृत्यम् ।
स्वाचारैकान्तनिष्ठो ज्वरपरवशतामश्नुवानोऽप्यरोगः
श्रीकान्तानुग्रहाद् द्रागभवदभाविकध्वंसिनः श्रीविशाखः ॥ ६८ ॥
जातः केरळमण्डलोदरगते श्रीपपभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीञ्चिराज्ञीपतिः ।
नेतुर्निर्जरनिम्नगाप्लवगयाश्राद्धादिकं वर्णयन्
सर्गस्तस्य चतुर्दशश्चतुरवाग्बन्धे प्रबन्धे गतः ॥ ६९ ॥

इति श्रीविशाखविजये चतुर्दशः सर्गः



पञ्चदशः सर्गः

श्रीपद्मनाभदासः सौहार्दादुज्झितोपचारविधिः ।
भारतभरणधुरीणं हूणवरं तद्गृहे रहोऽद्राक्षीत् ॥ १ ॥
प्रतिकृतिरालेख्यगता प्रहिताथ निजा नृपेण पत्रिकया ।
भारतभर्त्रे मुदितात् तस्माल्लेभे च काचन तदीया ॥ २ ॥
जीवानन्दमपश्यद्विद्यासागरपदाङ्कमत्र मुदा ।
विद्वन्मणिर्विशाखो राजपदाङ्कं हरेन्द्रकृष्णमपि ॥ ३ ॥

१ The Museum. २ प्राप्य. आङ्पूर्वाददेः क्त्वो ल्यप्. ३ The Theatre Royal. ४ "Romeo and Juliet." ५ नराधिपतिगृहे. ६ भारतभर्ता. दृष्ट इति लिङ्गविपरिणामेन योज्यम्. ७ रोगी. ८ अत्यजन्. ९ अमङ्गलध्वंसिनः. १० हूणवरगृहे.

कृतिना [1]क्षितिरतिरतिना कति नाम न तत्र धार्मिकसमाजाः ।
ददता द्रविणमदभ्रं विद[2]तौचित्यं वितेनिरे मुदिताः ॥ ४ ॥
दश वासराननुषित्वा नगरवरेऽस्मिन् नरेन्द्रमौलिमणिः ।
सायं विहिताभ्यवहृतिरधिरूढो धूमशकटमगमदितः ॥ ५ ॥
प्रातर्नरपतिरागादपरेद्युर्दिनपुराभिधं नगरम् ।
तत्र गयाध्यक्षादिभमित्रकृताराधनो दिनमनैषीत् ॥ ६ ॥
कतिचित् कौशेयानि क्षितिशक्राश्चाक्रि[3]येऽत्र चित्राणि ।
सायं प्रस्थायातः प्रातः प्राप प्रयाग[4]मग्न्यनसा ॥ ७ ॥
तत्रत्यो हूणवरः प्रत्युद्गत्यादरेण स[5]हपृतनः ।
अनयत् क्षितिवल्लभनं काशीराजस्य सौधमुपयमुनम् ॥ ८ ॥
राधाकृष्णाभिख्यस्तत्र पुरोधाः [6]प्रयागवास्तव्यः ।
आगत्य नृपमपश्यत् सम्मानं चाध्यगच्छदेतस्मात् ॥ ९ ॥
निशि पावकशकटगतः पृथ्वीशः प्रस्थितः प्रयागपुरात् ।
आससदुषसि परेद्यवि [7]नगरीं तां नर्मदासदेशगताम् ॥ १० ॥
कृतनानासत्कारः [8]पृतनानाथः स कश्चनात्मरथे ।
श्रीकुलशेखरमनयद् गोकुलदासस्य निष्[9]कुटावसथम् ॥ ११ ॥
गजधरनामा कश्चन जनपदशिलाधिकारि[10]कायस्थः ।
तत्रोपचचार नृपं यं पुनरकरोत् स मन्दुराध्यक्षम् ॥ १२ ॥
अथ रथमधिरुह्य ततः क्षितिपतिरतिलङ्घ्य दीर्घमध्वानम् ।
प्रतपति तपने प्राप श्लक्ष्णशिलापटलपेशलं देश[11]म् ॥ १३ ॥
तद्दिनमन्येद्युरपि स्वैरमसाव[12]पराह्णमिह विहरन् ।
पुण्यस्थलीरपश्यद्दृश्यतमा भूपतीरसौमनुजः ॥ १४ ॥

१ महीमन्मथेन. २ जानानेन. ३ क्रीतवान्. ४ अग्निशकटेन. ५ ससैन्यः. ६ प्रयागे वसतीति प्रयागवास्तव्यः, 'वसेस्तव्यत् कर्तरि णिच्च' इति तव्यत्प्रत्ययः. ७ Jubbulpore. ८ Colonel Grace. ९ गृहारामोपलक्षित गृहम्. १० कायस्थो गणकः. ११ The Marble Rocks. १२ अपराह्णमभिव्याप्य.

दधति दिने [1]दशमित्वं नगरं पुनरागतो नराधिपतिः ।
[2]जानपदपाठशालामालोकत तद्गतान् बुधान् [3]विन्वन् ॥ १५ ॥
वासमसावावासाद्य स्वीयं भूयो विधाय करणीयम् ।
अध्येत्रीणां स्त्रीणां गणमैक्षिष्ट [4]गजधरानीतम् ॥ १६ ॥
वनिताध्यापनजनितानमितान् जनतागुणानुदाहरता ।
अमनागमुनात्र सतां सदसि प्रकटीकृता [5]वैदावदता ॥ १७ ॥
पाठालययुगळाय प्रदाय [6]रायः स राजराट् प्रचुरान् ।
निरगान्नगराधिकृतैः [7]कृतमर्यादोऽधिरूढधूमरथः ॥ १८ ॥
प्रातः खाण्डवमागत इतरेद्युः क्षितिपुरन्दरः स पुरम् ।
[8]वरिवसितोऽभूत् पौरप्रवरैरधिकारिणा च हूणेन ॥ १९ ॥
[9]तद्देशनराधीशप्राहितेनामात्यपुङ्गवेन[10] [11]अमा ।
हूणवरेण च वञ्चिक्षोणीरमणः स्वमासदद्वासम् ॥ २० ॥
[12]स्वाग्रजसुहृदा [13]माळवभूपतिना प्रेषितानि तत्पुरुषाः ।
विविधफलानि विशाखक्ष्मापायोपायनान्युपाजह्रुः[14] ॥ २१ ॥
माळवनर[15]वरसचिवद्वन्द्वमिहागत्य वञ्चिवसुधेन्द्रम् ।
[16]होल्करपुरमिन्दूरं प्रार्थयतानुग्रहीतुमागमनात् ॥ २२ ॥
खाण्डवनगरे धरणे[17]राखण्डलतो वदान्यमौलिमणेः ।
[18]पुस्तकशालाद्वितयं वित्तमनुत्तमं[19]लेभे विद्वत्तः ॥ २३ ॥

१ वृद्धत्वम् , क्षयमित्यर्थः. २ The Municipal School. ३ प्रीणयन्. ४ गजधरनामककायस्थप्रापितम्. ५ वक्तृत्वम्. ६ धनानि. ७ कृता मर्यादा उपचरणरूपा स्थितिर्यस्य सः. ८ परिचरितः. ९ His Highness the Maharaja Holkar. १० Mr. Garud, the Chief Justice of Indore. ११ अमाशब्दः सहपर्यायोऽव्ययम्. १२ स्वाग्रजस्यायिल्यषर्क्षजरामराजस्य सुहृदा मित्रेण., १३ His Highness the Maharaja Holkar. १४ उपाहृतवन्तः. १५ Messrs Garud and Srinivasa Rao, Judges. १६ इन्दूरपुरेशस्य मालवराजस्य संज्ञेयम्. १७ विशाखात्. १८ The Native General Library and the European Library and Billiard Room. १९ लभते स्म.

अधिनिशमशनानन्तरमिन्दूरेशस्य पूरुषैर्विहितान् ।
उपचारान् स्वीकृत्य प्रातिष्ठत रामवर्मनृपतिरितः ॥ २४ ॥
गहनान्तरावगाहि [१]द्राघीयो वर्त्म निम्नमवतीर्य ।
आरुक्षदुपरिभूमिं समोन्नतां रामराजभूमरथः ॥ २५ ॥
तं दूरमतीत्य स्यानन्दूरपुरीपुरन्दरोऽध्वानम् ।
[२]सिन्दूररुचि प्राच्यामिन्दूरपुरं समागमत् [३]समया ॥ २६ ॥
तत्र [४]तुकाजिर्होल्करकुलदीपः प्रकटितोचिताटोपः ।
स्वयमागत्य विशाखक्षितिपतिमाश्लिक्षदादरातिभरात् ॥ २७ ॥
चतुरङ्गे तस्य बले नलिकरवैर्दिङ्मुखानि मुखरयति ।
[५]श्रीवञ्चिमहाराजे [६]तनयादीन् स न्यवेदयत् स्वजनान् ॥ २८ ॥
सम्भाष्य क्षणमुचितैः [७]सम्भाव्य श्रीविशाखमुपचारैः ।
स्वरथे माळवनृपतिर्निन्ये तद्वासयोग्यमुद्यानम् [८] ॥ २९ ॥
महती होल्करसेना नानावादित्रनिनदकमनीया ।
सम्पन्ना [९]सकलाङ्गैः [१०]संनिदधेऽस्यां नरेन्द्रयात्रायाम् ॥ ३० ॥
सहकारनिकरसान्द्रं सुरभिलकुसुमाभिराममारामम् ।
[११]यन्त्रोद्वान्तपयोभिः शिशिरितमागच्छतां [१२] महाराजौ ॥ ३१ ॥
पटमण्डपमेत्य पुनः [१३]परिषदि वञ्चीश्वरो यथाचारम् ।
माळवधरणीपतये व्यतरत् ताम्बूलगन्धमाल्यानि ॥ ३२ ॥
तदनु विसृज्य समज्यां तावद् भूवल्लभौ स्म संलपतः ।
यावत् तुकाजिराजः [१४]प्रत्यवसानाय निर्जगाम ततः ॥ ३३ ॥

१ दीर्घतरम्. २ शोणवर्णायां सत्याम्, अरुणोदयकाले इत्यर्थः. ३ समीपार्थकमव्ययम्. ४ तुकाजिनामा. ५ विशाखाय. ६ H. H. the Maharaja Holkar's two Sons, brother Sir Kasi Rao Dada Saheb, K. C. S. I., and the Political Agent. ७ सत्कृत्य. ८ the Lalbagh. ९ हस्त्यश्वरथपदातिरूपैः सेनाङ्गैः. १० संनिहिता. ११ जलयन्त्रोद्गीर्णैः पयोभिः. १२ आगतौ. १३ सभायाम्. १४ भक्षणाय.

नानाफलजालानि प्रैषयदिन्दूराद्विशाखाय ।
अपराह्णे पुनरागत्यै[1]तत्सल्लाँपसौख्यमन्वभवत् ॥ ३४ ॥

अथ होल्करसचिवेन्द्रा रथवरमारोप्य रामवर्मनृपम् ।
सादर[2]मन्तर्नगरं निन्युः संमान्य सैन्यसन्नाहैः ॥ ३५ ॥

सूरिपुरःसरमेनं राजर्षिं धर्मराज्यधौरेयं ।
द्रष्टुं कुतुकोत्तरलः [3]सममिळदिन्दूरपौरसमुदायः ॥ ३६ ॥

अविशज्ज[4]नितरसालं-
कारमथा[5]रामराजितरसालम् ।
अवनिनृपा [6]तरसा[7]लं
विपुलं तत् पुरम[8]धृष्यतरसालम् ॥ ३७ ॥

प्रविशति विशाखनृपतौ [9]प्रतिहारं राजकीयसौधस्य ।
आसीदाकाशान्तरमाचाररवधूमनादमेदुरितम् ॥ ३८ ॥

सौधवरस्याधस्ताद्विपुलाया मध्यमेत्य शालायाः ।
कुलशेखरभूपालं होल्करधरणीपतिः [10]प्रतीयेष ॥ ३९ ॥

तत्र तुकाजिनृपाय [11]न्यवेदि सदसि प्रसादसुमुखाय ।
रामावनिरमणेन स्वामात्यो [12]रामवैष्णवो धीमान् ॥ ४० ॥

होल्करवंशवतंसो राजद्रत्नं स [13]राजरत्नाय ।
प्रायच्छदङ्गुलीयं [14]प्रियतायाः स्मारकं विशाखाय ॥ ४१ ॥

वञ्चिक्षितिशतमन्युः सन्तुष्टो होल्करस्य सत्कारैः ।
प्रत्यागतवानुपवनभवनं पथि [15]पौरदृक्फलं पुष्णन् ॥ ४२ ॥

१ एतस्य विशाखस्य सल्लाँपसौख्यम्. २ नगराभ्यन्तरे. ३ संमिलितः. ४ जनितरसा उत्पादितरागा अलङ्कारा यस्मिंस्तत्. ५ आरामेषु राजिताः शोभिता रसालाः वृक्षविशेषा यस्मिंस्तत्. ६ तरसा वेगेन. ७ अलं अत्यर्थं विपुलम्. ८ अधृष्यतरोऽत्यन्तं धर्षयितुमशक्यः सालः प्राकारो यस्मिंस्तत्. ९ द्वारम्. १० प्रतीष्टवान्. ११ निवेदितः. १२ V. Ramiengar, C. S. I. १३ राजश्रेष्ठाय. १४ प्रेम्णः. १५ पौरनयनसाफल्यं जनयन्नित्यर्थः.

रात्रावत्रावसथे प्रदीपरुचिरप्रदीपराजिनिचिते ।
[1]गोत्रावृत्राराति भूयोऽप्यागत्य होल्करोऽद्राक्षीत् ॥ ४३ ॥

परिषदि तस्या[2]मेमिळन् मालवनृवरस्य मन्त्रिणो सहिताः ।
वञ्चीशस्यानुचरा मित्रं [3]हूणाग्रणीश्च सकलत्रः ॥ ४४ ॥

[4]हाहामोहावहया गायकसभया [5]ततादिसङ्गतया ।
शब्दब्रह्मामृतरसलहरी [6]चक्रे सभासदां श्रवसोः ॥ ४५ ॥

विविधानि विनोदार्थं विशाखनृपते[7]र्विचित्रितैर्वियन्ति ।
विस्मयदानि विशेषाद्वितेनिरे [8]वह्निहोत्रकर्माणि ॥ ४६ ॥

मतिमान् प्रतिमां स्वीयामतिमात्रमनोज्ञवर्णविन्यासाम् ।
अद्भुतशिल्पं [9]दान्तं भाजनमपि होल्कराय राजादात् ॥ ४७ ॥

ताम्बूलाद्युपचारान् समर्प्य वञ्चिक्षमाशचीरमणे ।
[10]व्याकिरदिन्दूरेन्द्रः कञ्चन सौरभ्यपूर्णमपि [11]चूर्णम् ॥ ४८ ॥

आमन्त्र्य रामराजः श्रीमन्तं होल्करं स्थिरप्रेमा ।
[12]तत्तनयेन रथस्थो झटिति जगामानलानसः स्थानम् ॥ ४९ ॥

माळवयुवराजं तं सम्भाष्यापृच्छ्य वञ्चिजम्भारिः ।
आरूढधूमशकटः खाण्डवभागात् पुनः [13]प्रगेऽन्येद्युः ॥ ५० ॥

[14]ग्रैवेयकमुरुमूल्यं [15]मुम्बापुरपूर्णचन्द्रमणिवणिजः ।
[16]अक्रैषीदिह कटकद्वयमपि हीरप्रकाण्डखचितमयम् ॥ ५१ ॥

सायमितः प्रस्थाय प्रगेतरां शिशिरकारिरिपुः ।
अतिलङ्घ्य भूधरोदर[17]कृतकदरीनगरमाप [18]कल्याणम् ॥ ५२ ॥

१ भूमीन्द्रम्. २ मिलिताः. ३ Mr J. C. Hannyngton, British Resident, Travancore. ४ हाहा गन्धर्वविशेषस्तस्य मोहावहया मोहकारिण्या. तदतिशायिन्येत्यर्थः. ५ ततं वाद्यविशेषः. ६ कीर्णा. ७ विचित्रिताकाशानि. ८ Fireworks. ९ इभदन्तनिर्मितम् १० व्याकीर्णवान्. ११ The *holi gulal* powder. १२ तस्य होल्करस्य तनयेन पुत्रेण सह. १३ प्रातः. १४ ग्रीवालङ्कारम्. १५ मुम्बापुरवासिनः पूर्णचन्द्राख्याद्रत्नविक्रेतुः सकाशात्. १६ क्रीतवान्. १७ कृत्रिमकन्दरान्. १८ तन्नामकम्.

अधिरुह्य रथमथासावारादासाद्य सज्जितां वसतिम् ।
स्नानाशनादि कृत्यं निर्वर्त्य व्यश्रमन्मुहूर्तमिह ॥ १३ ॥
पौरैराधिकारिभिनैः समर्पितस्योपचारपत्रस्य ।
सन्निवेश वाचितोत्तर एष ततो निर्जगाम मध्याह्ने ॥ १४ ॥
अपरां धरणिधरोदरकान्तं विलवैर्तनीरतीत्य जवात् ।
सायाह्नेऽयाप महीमहेन्द्रवाही पुनां कृशानुरथः ॥ १५ ॥
तत्र दिनं तन्नीत्वा परेद्यवि प्रस्थितेन सायाह्ने ।
प्रापि नृपेणान्येद्युः प्रातर्वेल्लाभिरादपुरी कापि ॥ १६ ॥
सैन्यसमेतैर्यवनप्रभुणाव्रिवैर्विहितसत्कृतिर्नृपतिः ।
उपगिरिदुर्गमनैर्षादुपवनभवने दिनं तदासायम् ॥ १७ ॥
आरुह्यानलशकटं निशामुखे प्रस्थितः क्षितिक्षिदितः ।
निकषा वृषगिरिनैवेद्यहा तदालोहितायत प्राची ॥ १८ ॥
अभिवन्द्य वेङ्कटेशं मध्येमार्गं महीपतिर्मनसा ।
पूर्वाह्ने गलितार्द्धे पुरमर्काणाद्य्रमापत्पुपरेन्द्रेन् ॥ १९ ॥
अधिकादरमत्रत्यैरधिकारिभिराहितार्हणोऽन्यैश्च ।
सायं धूमरथस्थः प्रस्थितवानवनिपालमौलिरितः ॥ २० ॥
भूपस्तदुत्तरेद्युः प्राप प्रातस्तरां प्रसन्नमनाः ।
कुतुकोत्तरलितजनताकोलाहलशालि कुम्भघोणपुरम् ॥ २१ ॥
मिळते महाजनौघे तत्र धरित्रीपतिं सभाजयति ।
निष्ठुरनालिकसहस्रध्वानैर्निर्बधिरीबभुव दिगिभकुलम् ॥ २२ ॥
हूणवरौ सहृदारौ मुहुरावपि शेषशास्त्रिगोपालौ ।

१ विश्रान्तवान्. २ 'सरणिः पद्धतिः पद्या वर्तन्येकपदीति च' इत्यमरः. ३ पुरीविशेषम्. ४ प्राप्ता. ५ The Nizam. ६ Raichu ७ गिरिदुर्गसमीपे. ८ प्रागुक्तपुरीतः. ९ 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इति द्वितीया. १० मार्गमध्ये. ११ प्राप्तः. १२ Near Madras. १३ प्रस्थितः. १४ पूजयति सति. १५ दिग्गजकुलम्. १६ Mr. Buick, the Collector, and Mr. Cross, the District Supt. of Police. १७ The Honoroble A. Seshaiya Sastrial and Mr. T. Gopal Rao

अन्ये च मान्यपुरुषा निन्[1]युः सत्कारमण्डपं नृपतिम् ॥ ६३ ॥
कॢप्तपुष्पोल्लोचे[2] तस्मिन्नुत्कृष्टविष्टरनिविष्टम् ।
अन्वग्रहीन्महीसुरपरिषदमुं वैदिकीभिराशीर्भिः ॥ ६४ ॥
जानपदाध्यक्षाणां सूक्ति[3]गोपालसूरिपाठितायाः ।
उत्तरमुचितमवोचत् सचिवमुखेन क्षमाशचीरमणः ॥ ६५ ॥
हूणेन्द्रेण सहामुं ततः शताङ्गाधिरूढमभि[4]रथ्यम् ।
मिळिता दिदृक्षमाणा[5] गाळितावधिरिद्धकळकळा जनता ॥ ६६ ॥
पुण्यश्लोकविलोकनसरभसजनसङ्घनिरवकाशायाम् ।
रथ्यायां रथ्या[6]नां द्व्यङ्गुलमपि[7] न स्थलं सुलभ्य[8]मभूत् ॥ ६७ ॥
तत्तादृगतिथिलाभान्निर्भरतोषेण तेन शेषेण ।
साधु प्रसाधितं[9] तत्[10]सद्मवरं पद्मनाभदासोऽगात् ॥ ६८ ॥
कलिकलुषध्वंसिन्यां कलितमज्जनः कावेर[11]कन्यायाम् ।
कृतभोजनोऽपराह्णे क्षितिजानिरसेवि[12] शेषशास्त्रिमुखैः ॥ ६९ ॥
वीणा[13]दिवाद्यवादनचुञ्चुभिरथ वाञ्चिधरणिपञ्चशरः ।
सङ्गीतशास्त्रतत्त्वं सम्यग्विद्वान् विनोद[14]याञ्चक्रे ॥ ७० ॥
श्रीकामकोटिपीठे लोकाचार्यं तटेऽर्ध[15]गङ्गायाः ।
एकायनः स्वकृत्ये पाकारि[16]रवन्दतैत्य वसुमत्याः ॥ ७१ ॥
शङ्करभगवत्पादप्रतिनिधिरुचिताभिरेनमुपदाभिः ।
उप[17]तस्थे नृपतिमगिरिमहिमाकिरीणसम्मानान् ॥ ७२ ॥

१ 'णीञ् प्रापणे' इति द्विकर्मको धातुः. २ कल्पितकुसुमवितानेः 'अस्त्री वितानमुल्लोचः' इत्यमरः. ३ स्वागतमङ्गलवाचकस्य ४ रथ्यायाम्. ५ द्रष्टुमिच्छन्ती 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम्. ६ रथशब्दात् 'तद्वहति रथयुगप्रासङ्गम्' इति यत्. ७ द्वे अङ्गुली प्रमाणमस्येति तथा तत्पुरुषस्याङ्गुलेरिति अच् समासान्तः. तद्धितार्थद्विगोर्मात्रचो लुक्. ८ सुखेन लब्धुं शक्यम्. ९ अलंकृतम्. १० तस्य शेषशास्त्रिणः सद्मवरम्. ११ कावेर्याम्. १२ सेवितः. १३ वैणिकादिभिरित्यर्थः. १४ विनोदितः. १५ कावेर्याः. १६ इन्द्रः. १७ पूजितवान्. 'उपाद्देवपूजा–' इत्यादिना तङ्.

अन्ये च मान्यपुरुषा [1]निन्युः सत्कारमण्डपं नृपतिम् ॥ ६३ ॥

[2]कल्पितपुष्पोल्लोचे तस्मिन्नुत्कृष्टविष्टरनिविष्टम् ।
अन्वग्रहीन्महीसुरपरिषदमुं वैदिकीभिराशीर्भिः ॥ ६४ ॥

जानपदाध्यक्षाणां [3]सूक्तेर्गोपालसूरिपठितायाः ।
उत्तरमुचितमवोचत् सचिवमुखेन क्ष्माशवीरनगः ॥ ६५ ॥

हूणेन्द्रेण सहामुं ततः शताङ्गाधिरूढमेनमिरथ्यम् ।
मिळिता [5]दिदृक्षमाणा गळितावधिरिद्धकळकळा जनता ॥ ६६ ॥

पुण्यश्लोकविलोकनसरभसजनसङ्घनिरवकाशायाम् ।
रथ्यायां [6]रथ्यानां [7]द्व्यङ्गुलमपि न स्थलं [8]सुलङ्घमभूत् ॥ ६७ ॥

तत्तादृगतिथिविलाभाविर्भरतोषेण तेन शेषेण ।
साधु [9]प्रसाधितं [10]तत्सद्मवरं पद्मनाभदासोऽगात् ॥ ६८ ॥

कलिकलुषध्वंसिन्यां काले [illegible]नः [11]कावेरकन्यायाम् ।
कृतभोजनोऽपराह्णे क्षितिजानिर[12]सेवि शेषशास्त्रिमुखैः ॥ ६९ ॥

[13]वीणादिवाद्यवादनचुञ्चुभिरथ वाञ्चिधरणिपञ्चशरः ।
सङ्गीतशास्त्रतत्त्वं सम्यग्विद्वान् [14]विनोदयाञ्चक्रे ॥ ७० ॥

श्रीकामकोटिपीठे लोकाचार्यं तटेऽ[15]र्धगङ्गायाः ।
एकायनः स्वकृत्ये [16]पाकारिरवन्दतैत्य वसुमत्याः ॥ ७१ ॥

शङ्करभगवत्पादप्रतिनिधिमुचिताभिरेतमुपदाभिः ।
[17]उपतस्थे नृपतिनाभिगृह्य [illegible]सम्मानान् ॥ ७२ ॥

१ 'नीञ् प्रापणे' इति द्विकर्मको धातुः. २ कल्पितकुसुमवितानके. 'अस्त्री वितानमुल्लोचः' इत्यमरः. ३ स्वागतमङ्गलवाचकस्य ४ रथ्यायाम्. ५ द्रष्टुमिच्छन्ती 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम्. ६ रथशब्दात् 'तद्वहति रथयुगप्रासङ्गम्' इति यत्. ७ द्वे अङ्गुली प्रमाणमस्येति तथा तत्पुरुषस्याङ्गुलेरिति अच् समासान्तः. तद्धितार्थद्विगोर्मात्रचो लुक्. ८ सुखेन लङ्घितुं शक्यम् ९ अलंकृतम्. १० तस्य शेषशास्त्रिणः सद्मवरम्. ११ कावेर्याम् १२ सेवितः. १३ वैणिकादिभिरस्वर्थः १४ विनोदितः. १५ कावेर्याः. १६ इन्द्रः. १७ पूजितवान्. 'उपाद्देवपूजा–' इत्यादिना तङ्.

प्रत्यागत्यावसथं पत्या क्षित्या यथाप्रतिज्ञातम् ।
प्रापि कलाशाला सा वार्षिकसम्मानवितरणाय ततः ॥ ७३ ॥
संख्यावन्तोऽसंख्याः संमिळितास्तत्र वज्रिवलमथनम् ।
हूणवरेणानुगतं गोपालाद्याः सभाजयांचक्रुः ॥ ७४ ॥
तदनु तदध्यक्षस्य श्रीगोपालस्य निपुणविज्ञप्तिम् ।
निशमय्याध्येतृभ्यः सम्मानानैदित मुदितहृदयोऽयम् ॥ ७५ ॥
कमपि प्रसङ्गमकरोत् कमनीयतमं ततोऽवनीजानिः ।
मतिमान् स मद्रभर्ता यदुपन्यस्तार्थमभिननन्द पुनः ॥ ७६ ॥

कृतहस्ततालमभिरूप-
　परिषदनुमोदितस्ततः ।
प्राप वसतिमवनीवलभित्
　परितोषघोषमुखरे जनोत्करे ॥ ७७ ॥
विहिताशनो निशि विशाख-
　नृपतिरतिमात्रमानितः ।
शेषविबुधवृषभेण कृती
　प्रतुतोष साधु दधतातिथेयताम् ॥ ७८ ॥
उपदीकृताम्बरवराय
　सपदि सुहृदे ददौ नृपः ।
रत्नरुचिरमुरआभरणं
　सपटोद्गमस्य तनयाय चोर्मिकाम् ॥ ७९ ॥
अतिचारु राजतमिहत्य-
　चतुरतरशिल्पिकल्पितम् ।

१ प्रतिज्ञानमनतिक्रम्य. कलाशालामागमिष्यामीति पूर्वकृतप्रतिज्ञानुसारेणेत्यर्थः. २ पाण्डिताः. ३ इन्द्रम्. ४ Mr. Grant Duff, Governor of Madras. ५ कृतं हस्ततालं संतोषातिशयसूचकं करास्फालनं यस्मिन् कर्मणि तत् तथा. ६ विद्वत्समाजानुमोदितः. ७ अतिथौ साधुरातिथेयस्तत्ताम्. 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ्. ८ वस्त्रश्रेष्ठसहितम्. ९ अङ्गुलीयकम्. १० इह चोलदेशे भवा इहत्याः. 'अव्ययात्त्यप्' इति त्यप्. इहत्याश्चतुरतराश्च ये शिल्पिनस्तैः कल्पितम्.

पात्रपटलमथ पौरवरैः
    परिढौकितं परिवृढोऽग्रहीन्नृणाम् ॥ ८० ॥

आमन्त्र्य तूणाधिकारिप्रधानान्
    सभ्यानथाभ्येत्य संसेवमानान् ।
आरुह्य कौशानवानः प्रतस्थे
    वञ्चिक्षमापालवंशैकमुक्ता ॥ ८१ ॥

तञ्चापुरीसन्निधौ श्रीविशाख-
    स्तैस्तुष्टुवनस्येत्य तत्रत्यलोकैः ।
वञ्चावुरीकृत्य चन्द्रत्वमुद्य-
    न्नाराधि संप्राड्विवाकप्रवेकैः ॥ ८२ ॥

ऊष्मायमाणे रवावुत्तरेद्युः
    श्रीशालिवाटीपुरीमाटिटीके ।
तद्देशधौरेयहूणेशमुख्यैः
    सम्भावितोऽभूच्च भूजम्भभेदी ॥ ८३ ॥

पौरोत्कराध्यक्षितख्यातसीता-
    रामेरितस्वागतोदारसूक्तेः ।
पृथ्वीपतिर्दत्तवानुत्तरं स
    प्रत्यग्रक्लृप्तां प्रविश्याथ शालाम् ॥ ८४ ॥

१ उपदीकृतम्. २ कृशानुसम्बन्धिशकटम्. ३ अत्र वंशशब्दः कुलं वेणुं चाह. श्लिष्टशब्दनिबन्धनं केवलं परम्परितरूपकम्. ४ अनसि स्थितवति सति. ५ वञ्चौ स्वराज्ये चन्द्रत्वं उरीकृत्य उद्यन्. ६ प्राड्विवाकश्रेष्ठाभ्यां (Mr. Parker, District Judge, and Mr. Arunachala Iyer, Sub Judge) सहितैः तत्रत्यलोकैः. ७ ऊष्माणमुद्वमति. 'बाष्पोष्मभ्यामुद्वमने' इति क्यङ्. ८ Mr. Pennington, the Collector. ९ पौरोत्करैरध्याक्षितः स्वापेक्षया नायकीकृतः ख्यातश्च यः सीतारामस्तन्नामकः प्राड्विवाकस्तेनेरिता उक्ता या स्वागतोदारसूक्तिस्तस्याः १० This gentleman was since one of the Judges of the High Court, Travancore. ११ नवरचिताम्.

अथ हूणवर्यसहितो रथस्थितः
प्रथमानभक्ति बहुमानितो जनैः ।
धरणीतुषारकिरणो विशाखरा-
डरुणाचलार्यशरणं समाययौ ॥ ८५ ॥

अपराह्ण एत्य समसेवि सूरिभि-
र्नृपराजिमौलिमणिरेष भूरिभिः ।
वितताार वित्तमभिजातयोषिताम्
वितताादरः पुरु च पाठसद्मने ॥ ८६ ॥

निमन्त्रितो हूणवरस्य तस्य
दारैरुदारैः पुनरेष सायम् ।
समन्त्रिकोऽगात् ससुतस्तदीय-
मारामसौधं बहु चाराराधे ॥ ८७ ॥

मान्यैरनेकैर्बहुमानितोऽत्र
मार्त्तण्डवर्मप्रियभागिनेयः ।
ततोऽनलानोकलनानुशोची
प्रातिष्ठतान्दोलिकया निशायाम् ॥ ८८ ॥

प्रगेतरां क्षितिरमणोऽथ चित्रा-
सरिज्झरीसविधपुरीं
अनुग्रहानलभत शोणसाल-
द्विजव्रजादुपहृतपूर्णकुम्भात् ॥ ८९ ॥

निवर्त्याथ स्नानविधिं निर्झरनीरे
भूपो भुक्त्वा वेश्मनि विश्रम्य मुहूर्त्तम् ।

१ सूर्यचन्द्र [illegible] २ अरु[illegible] गग[illegible] हर्. ३ दत्तवान्. ४ कुलवधूनाम्. ५ पाठशालायं The C[illegible] School at Palamcottah. ६ Mrs. Penn[illegible] [illegible] आर[illegible]धन ८ अनलानसोऽग्निशकटस्य अकलनं तद्[illegible]नमार्गानर्माणाभावहे[illegible]कं यान[illegible]भावं अ[illegible]शोचि[illegible] शालमस्येति तथा. ९ 'समवप्र-विभ्य: रथ' इति तद्. १० Courtallum. ११ शोणसाल इति (Shencottah) स्वराज्यान्त:पाती ग्रामविशेषस्तत्रत्यब्राह्मणसमूहात्.

निर्माणार्त्थं वित्तचयं चित्रसभायाः
   प्रादात् क्रीतं प्रैक्षत चात्मार्त्थमिहौकः[1] ॥९० ॥
प्रस्थायाथ प्रभुरपराह्णे
   प्राविक्षत्[2] स्वं जनपदमारात् ।
प्रापच्चान्तः प्रमदमदभ्रम्
   ध्यायंध्यायं[3] सरसिजनाभम् ॥ ९१ ॥
धात्रीशकाशीयात्राजयाङ्कं[4]
   निर्माय शोणप्राकारलोकाः ।
द्वारं विशालं भूपालमौले-
   श्चक्रुः सपर्यामानन्दसान्द्राः ॥ ९२ ॥
उपकलुतुरुटि[5] त्रियामाम्[6] उषित्वा
   नृपकुलतिलकोऽपरेद्युः प्रभाते ।
उदवसितम्[7]अगात् स्वमेकोपलस्थं[8]
   द्रुतमथ कृतभोजनोऽतः[9] प्रतस्थे ॥ ९३ ॥
तदनु पुनलूराख्यं ग्रामं गतः कुलशेखर-
   क्षितिवलरिपुः शिल्पाधी[10]कारि[11]हूणवरान्वितः ।
उपरि सरितस्तु[12]ङ्गस्तम्भावलम्बितशृङ्खला-
   कलितमयनं चित्रं तत्र व्यलोकत कौतुकात् ॥ ९४ ॥
प्राप्य प्रासादतीराभिधपुरम्[13]अपरेद्युः प्रभाते विशाखः
   कृत्यं निर्वर्त्य कौरस्फरतलम्[14]अगमद्वेगेना स्यन्दनेन ।

१ गृहम्. Mrs. Payne's house bought by the Sarkar. २ विश्धातोर्लुङ्. 'शल इगुपतात्–' इति क्सः. ३ ध्यात्वा ध्यात्वा. ध्याधातोः 'आभीक्ष्ण्ये णमुल् च' इति णमुल्. ४ धात्रीशस्य विशाखस्य या काशीयात्रा सैव उत्कर्षहेतुत्वाज्जयस्तस्य अङ्कं चिह्नं, उचितलिपिविन्यासेन प्रतिपादकमित्यर्थः. ५ कलुतुरुटिग्रामसमीपे. ६ रात्रिम्, 'अत्यन्तसंयोगे द्वितीया'. ७ गृहम्. ८ एकोपलाख्यग्रामस्थम्. ९ एकोपलात्. १० 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्यधिशब्देकारस्य दीर्घः. ११ Mr. Valentine, Assistant Engineer. १२ The Suspension Bridge. १३ Kottârakkarai. १४ Kânjiramûtu.

तत्रारुह्याभिरामां तरणिमनुभवन् वारिसञ्चारसौख्यं
कोलम्बं लम्बमानेऽव्रजदपरगिरेरर्कबिम्बे नितम्बे ॥ ९५ ॥

आनन्देनात्र नानाविधबहुमतिपूर्वोपचारैः प्रजाभिः
श्रीमानाराधितो बन्धुभिरपि बहुभिः सादरं सेव्यमानः ।
नीत्वा स्वैरं नरेन्द्रो दिनयुगलमितो नीरमार्गेण सायं
निर्गत्यान्येद्युरागादुषसि निजपुरीं श्रीसरोजाक्षदासः ॥ ९६ ॥

जातः केरलमण्डलोदरगते श्रीपर्वभूपान्वये
ख्यातः केरलवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
नानातीर्थनिषेवणात् सुकृतिनं प्रत्यानयन् नायकम्
सर्गः पञ्चदशो विशाखविजये काव्ये तदीये गतः ॥ ९७ ॥

इति श्रीविशाखविजये पञ्चदशः सर्गः ।

## षोडशः सर्गः.

श्रियमुदारतरां दधतं निज-
प्रभुमथात्मपुरीं सुखमागतम् ।
उपचितैरुपचारभरैर्जनाः
समुदिता मुदितास्समभावयन् ॥ १ ॥

हयचतुष्टयशालिरथस्थितो
नरवरः प्रविवेश पुरोदरम् ।
प्रमदभारतरङ्गितसेवक-
व्रजनतो जनतोषमुदञ्चयन् ॥ २ ॥

प्रकृतिभिर्बहुधा विदधेऽर्हणा
प्रतिपथं पृथिवीपतिपुङ्गवे ।

१ नावम्. २ नगरीविशेषम्, Quilon. ३ भागिनेयीभर्त्रादिभिः. ४ कोलम्बात्. ५ स्यानन्दूरापरनामधेयां वञ्चिपुरीम्. ६ सङ्गीभूता ७ सम्भावितवन्तः.

विशति मङ्गलमण्डनमञ्जुलं
पुरमुदारमुदारवमेदुरम् ॥ ३ ॥

घटितभूरिसभाजनमण्डपं
विरुरुचे परितो नगरान्तरम् ।
प्रसृमरोत्सवघोषविजृम्भितं
प्रमदभूमदभूमवचागमात् ॥ ४ ॥

रथवरादवरुह्य महीपतिः
परिसरे पुरुषोत्तमसद्मनः ।
उपनतान् स्वजनान् समुदित्वर-
त्वरमगारमगाहत वीक्षितुम् ॥ ५ ॥

स्वदयितार्पितमङ्गलयद्वयः
स्वसृसुताहितयाय दयानिधिः ।
अदित कण्ठविभूषणसुद्गम-
द्रमणीरमणीयमयं मुदा ॥ ६ ॥

अतुलभक्तिभरः कुलदैवतं
कमलनाभमुपायनसञ्चयान् ।
उपहरन्नभिवन्द्य सुवासिकां
निजगृहे जगृहे जगतीपतिः ॥ ७ ॥

वसुमतीशसमागमसम्मदं
द्विगुणितं विदधत् पुरवासिनाम् ।
सुरभिराविरभूत् सुमनोभरा-
नुपवने पवनेन समाकिरन् ॥ ८ ॥

जनयता जननाथशिखामणे-
र्नवयशःप्रसरस्य विडम्बनाम् ।

१ उदारैर्महद्भिः, मुदारवैर्जनानामानन्दघोषैर्मेदुरम्. २ प्रमदभूमानं सन्तोषातिशयं ददातीति तादृशो योभूमघोनो राज्ञ आगमः प्रत्यागमनं तस्माद्धेतोः. ३ स्त्रीलिङ्गान्मणिशब्दात् कृदिकारङीप्. 'रत्नं मणिर्द्वयो'रित्यमरः. ४ वसन्तः. ५ अनुकरणम्.

नृपतिनिष्कुटसीमनि माधवी
सुमधुरामधुरा मधुनादधे ॥ ९ ॥
अभिनवोद्गतपल्लवचर्वण-
क्षणमदोत्कटितैः स्पृहणीयताम् ।
अतितरां सहकारमहीरुहः
परभृतैरभृतैर्घनकूजितैः ॥ १० ॥
मधुमदान्धमधुव्रतहुङ्कृति-
र्विरहिणः कतमस्य जनस्य वा ।
वितनुते स्म मनोभवशिञ्जिनी-
स्वनसमा न समाकुलमाशयम् ॥ ११ ॥
वनविहारविलोलविलासिनी-
वदनजश्रमवारिहरो वशी ।
प्रकटयन् पवनः प्रसरद्रजः-
पटलपाटलपाटनपाटवम् ॥ १२ ॥
स्फुरदशोकलतानवपल्लवा
सुरभिसम्पदयोगिनिवाभया ।
प्रतिघहुङ्कृतिवत्प्रचुरीभवत्-
पिकरवा करवालमिवाददे ॥ १३ ॥
मदकलान् मधुपानपमारयन्
मलयशैलमरुत् परिपातुकान् ।
समुपगूढसवेपथुमाधवी-
नवलतोऽवैलतोपवनान्तरे ॥ १४ ॥

१ निष्कुटस्य गृहारामस्य सीमनि. २ पुष्पभारमनोज्ञा. ३ भृतवान्. ४ मनोभवशिञ्जिन्या मन्मथमौर्व्याः स्वनेन समा. ५ प्रसरद्रजःपटलानां पाटलानां ग्रीष्मगृह्याणां कुसुमविशेषाणां पाटने विदलने पाटवम्. ६ कोपहुङ्कारेण तुल्यं प्रचुरीभवन् पिकरवो यस्यास्सा. ७ परिवाति स्म.

कलकलः कलकण्ठगलोदरात्
[1]कलकलो गलति स्म निरर्गलम् ।
प्रणयिनां प्रमदं भृशमादधत्
[2]प्रियतमायतमानमलिम्लुचः ॥ १५ ॥

रतिपतेर्ज्वलनास्त्रमिव ज्वलत्
भृशमशोकतरौ नवजालकम् ।
विरहविह्वलकामुकसंहती-
रतनुतातनुतापकदर्थिताः ॥ १६ ॥

भ्रमरहुङ्कृतिभिर्घटितस्फुट-
श्रुतिकमुन्मदकोकिलगायने ।
किमु विहारवनी विकचस्फुरत्-
कुरवका [3]रवकारिणि सिप्मिये ॥ १७ ॥

पथिकवामदृशोऽकलयन् मधौ
शिखिसमीरसखित्वयथार्थताम् ।
अतिसमिद्धवियोगहुताशनाः
कति न वाति नवाम्रवणानिले ॥ १८ ॥

[4]सहचिकीर्षुतया स्वयमागतः
शशधरौघ इवालिकलङ्कितः ।
कुरवकस्तबकप्रकरोऽध्वग-
द्रुहि मधौ हिमधौतरुचिर्बभौ ॥ १९ ॥

सपदि कोकिलया हृदयङ्गमा-
लपितया प्रिययेव वयस्यया ।
अपि [5]समन्तुममर्षवशापि का
न कमनी [6]कमनीयत कामुकम् ॥ २० ॥

---

१ अतिशयेनाव्यक्तमधुरः. २ प्रियतमानां प्रेयसीनामायतस्य मानस्येर्ष्याकोपस्य मलिम्लुचश्चौरः. ३ रवं करोतीति तथा तस्मिन्. ४ सहकर्तुमिच्छुतया, ५ सापराधमपि. ६ कं कामुकं का कमनी नानीयतेति योजना.

जनमदारमदारयदाशुगै-
रिह रसालरसालसकोकिले ।
परमुदारमुदा रमणीजुषो
रसमये समये स मनोभवः ॥ २१ ॥

सुमनसां[1] सुरसाल[2] इहैधय-
न्नवनिजानिरिवानुपमां श्रियम् ।
प्रमुदितं सुरभिः सुमधन्वनः
सुहृदयं हृदयं विदधे नृणां ॥ २२ ॥

नृपतिर्नीतिनिबन्धनया प्रिया-
सहचरा विशिखासु चरिष्णवः ।
सरसमन्वभवन् मधुमारुतं
पुरजना रजनावपि निर्भयाः ॥ २३ ॥

अथ स फाल्गुनमासिकमुत्सवं
स्वकुलदैवतभक्तिवशंवदः
नरवरो निरवर्तयदुच्चकै-
र्महितमाहितमानमहाजनम् ॥ २४ ॥

जनितनन्दनदारपरासुता-
व्यथितधीरभवद्युवभूपतिः ।
सकलसज्जनसम्मतसद्गुणै-
र्नवमो नवमोत्सववासरे ॥ २५ ॥

युवनृपः सहसा नवयौवन-
प्रणयिनीविरहासहमानसः ।
अविरतं प्रणतार्त्तिहरं हरिं
निहतमोहतमोभरमस्मरत् ॥ २६ ॥

१ पुष्पाणां विदुषां च. २ शोभना रसालाश्चूता यत्र, अथ च देवतरुः. ३ मित्रम्. ४ आहितमानाः कृतपूजा महाजना यस्मिंस्तम्. ५ उत्तमः.

भुजगतारजमातुलनन्दना[1]-
प्रतिनिधिप्रियदारवियोगजाम् ।
परिजहार कथञ्चिदथ व्यथां
भृशमयं शमयन्त्रितमानसः ॥ २७ ॥

भृशमशोचि विशाखमहीभृता
युवनराधिपतत्सुतयोर्यतः ।
जनु[2]रनन्तरजन्यदशावशात्
स्व[3]समता समतानि जगत्कृता ॥ २८ ॥

अखिलशास्त्ररहस्यविदग्रगः
स्वजनसन्ततये सततं हितम् ।
उपदिशन् कुलशेखरभूपति-
र्मुदमदादमदाशयमानदः ॥ २९ ॥

नरवरोऽदित केरलवर्मणे
सरसतत्कवितापरितोषितः ।
कमपि हेमलताङ्कनाचार-
च्छविमलं विमलं वरकञ्चुकम् ॥ ३० ॥

यमश्रृणोदथ भारतनायिका
स्व[5]बहुमानमधादिति भूपतिः ।
प्रथममेव निजप्रियबान्धवे
कृतमुदं तमुदन्तमुवाच सः ॥ ३१ ॥

अकृतकप्रमदाकुलमानसै-
रखिलमान्यजनैरभिनन्दितः ।

१ नन्दनाप्रतिनिधिशब्दः कृत्रिमपुत्रीतात्पर्यकः. २ जनुरनन्तरजन्या या दशा-मातृवियोगरूपा तस्या वशात्. ३ स्वतुल्यता. त्रयाणामपि जननानन्तरमचिरान्मातृ-वियोगो जातः. ४ एतत्काव्यकवये. ५ स्वबहुमानं G. C. S. I. इति प्रसिद्धं भारतनक्षत्रविरुदम्, ६ पूर्वश्लोकात् 'केरलवर्मणे' इतिविशेष्यानुषङ्गः.

अपि गरिष्ठपदाधिगमे नृपो
　विनतिमानतिमात्रमशोभत ॥ ३२ ॥

अहह तेन तथा न नृपाग्रणी-
　रलमकारि यथाद्भुतसद्गुणः ।
तदिह भारतभाग्यम्[1] अभूषयत्
　पदमसौ[2] दमसौष्ठवसम्पदा ॥ ३३ ॥

उपनतां जनतामपि सम्भृतां
　स्वजननर्क्षदिनेऽथ जनेशिना[4] ।
विविधसत्कृतिभिर्विदधे तरां
　प्रमुदितामुदितानुपनादरः ॥ ३४ ॥

कथम्[3]अनीतिकथाऽस्य मनीषिणो
　जनपदे नृपतेरुपजायताम् ।
इति किमीतिरभूदतिकृष्टितः
　परिचिता रचिताश्च घनागमे ॥ ३५ ॥

व्यलसदुग्रसमीरसमीरणात्
　किमु समुत्पतदम्बुधिमण्डलम् ।
स्फुरदिरम्मद[5]वाडवपावकं
　वृतम्[6]अनन्तमनन्तरितैर्घनैः ॥ ३६ ॥

स्वपरिपन्थिनिदाघविनिर्गमं
　त्वरयितुं जलदागमवेलया ।
कनकवेत्रलतेव मुहुर्नभ-
　स्यचिररोचि[7]रशोभत [8]वेल्लिता ॥ ३७ ॥

१ भारतनक्षत्राख्यपदेन. २ नृपाग्रणीः. ३ नीत्यभाववार्ता, अथच ईत्यभाववार्त्ता. ४ परमेश्वरेणेत्यर्थः. इत आरभ्य पञ्चविंशत्या पद्यैर् निवर्णनम्. ५ ‘मेघज्योतिरिरम्मदः’ इत्यमरः. ६ आकाशम्. ७ विद्युत्. ८ चालिता.

सरभसारभटीपटुवल्गना-
वितत[1]बर्हभरस्फुटचन्द्रकाः ।
मदकळा विपिनेषु शिखावळा
मुमुदिरे मुदिरे कृतगर्जिते ॥ ३८ ॥

भुजगभुङ्मिथुनस्य विलोक्य तत्
प्रमदनर्त्तनमम्बुभृदुद्गमे ।
गतमिवाक्षमया [2]प्रियमानसै-
रवनितो वनितोपगतैर्द्रुतम् ॥ ३९ ॥

विहितदिङ्मुखचुम्बनसाहसः
समुपगूढपयोधरमण्डलः ।
सरभसस्य बभूव सदागते-
र्दिवि ततो वितर्तो[3]ऽतनुविभ्रमः ॥ ४० ॥

विरहिखेदमजीजनदा[4]त्मभू-
विजयशङ्खविशृङ्खलनादवत् ।
मधुकरप्रकरस्य समुल्लसत्-
कुटजकूटजकूजितधोरणी ॥ ४१ ॥

[5]सुमनसो घनसङ्घविघट्टितात्
[6]सुमनसो गळितस्य नभस्तटात् ।
उडुगणस्य परिस्फुरतस्तुला-
मगुरभङ्गुरभङ्गिविकस्वराः ॥ ४२ ॥

मदकळस्य मनोभवहस्तिनो
रदनकोरकमुल्बणतामगात् ।
मिळितपान्थवधूवधपातकं
कि[7]मलिना मलिनाकृति केतकम् ॥ ४३ ॥

१ मेघे. २ हंसैः. ३ अनल्पो विलासः भ्रमणं वा. अथ च कामविलासः. एतदनुरोधेन मुखचुम्बनपयोधरशब्देषु श्लेषो बोध्यः. ४ आत्मभुवः कामस्य. ५ माल्याः. ६ पुष्पाणि. ७ भ्रमरेण.

अतितराम[1]तिरोहितरोहितः
स्फुटतटित्पटलोर्जितगर्जितः ।
अ[2]मितवृष्टिभयस्य घनाघनो
गगनमार्गनभावमवेदयत् ॥ ४४ ॥

करकमिश्रनिरर्गलनिर्गल-
द्बहलनीरभरेण धरातलम् ।
रचयितुं सहसोदमहन्त त-
त्समयमम्मयमम्बुदपङ्क्तयः ॥४५ ॥

अ[3]भयनीरदया क[4]लितावृता-
वथ दिवापि दिवा[5] दिवसाधिपे ।
कमिव चेतनमन्धितमञ्जसा
घनतमो न तमोनिकरोऽकरोत् ॥ ४६ ॥

पृथुलधारमुदारजवोत्कटा
निपतिता नभसः सलिलच्छटा ।
स्फुरदनेकशतह्रदनीरद-
व्रजगता जगतामतनोद् भयम् ॥ ४७ ॥

विदधति द्वि[6]जराजनिराकृतिं
परिभवत्यपि मित्र[7]मनेहसि ।
उचितमेतदशेषजला[8]शया
धृत[9]रसास्तरसा स्थिति[10]मत्यगुः ॥ ४८ ॥

१ अतिरोहितं व्यक्तं रोहितं ऋजु शक्रधनुर्यस्मिन् सः. 'इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितं' इत्यमरः. २ अभावव्यतिरेकं, सत्तामित्यर्थः. ३ अभया विघटकवाताभावादनाकुला नीरदा मेघा यस्यां तया. अनेन पदेन कलिशब्द[illegible]न कटपयादिसंख्यापरिभाषया अकाराद्यक्षरैः १८२०१४० इत्यतिवृष्ट्यारम्भकालिदिनस[illegible]या मुद्रालङ्कारभङ्ग्या सूचिता. ४ कृतावरणे. ५ आकाशेन. ६ चन्द्रनिह्नवं ब्राह्मणश्रेष्ठनिराकरणं च. ७ सूर्यं सुहृदं च. ८ सरांसि जडाश्च. ९ धृतजला धृतवीर्याश्च. १० मर्यादाम्.

सरिदुपान्तकुटीरनिवासिनः
सपदि पर्यहरन्नथ कर्षकाः ।
क्षितिरुहानधिरुह्य कथञ्चन
स्वयमपायमपामतिवृद्धिजम् ॥ ४९ ॥

अभूत वाङ्मनसाविषयं भयं
नियतिदुर्ल्ललिताज्जनता तदा ।
बलवदोघहृताखिलगृह्यका[2]
विधुरबन्धुरबन्तरितालया ॥ ५० ॥

विटपिनस्त्रुटितानपसारय-
न्नरमरण्यमृगानपि मार्गगान् ।
समुदयः सरितामतिभीतिद-
ध्वनिरुँगान्निरगान्निबिडोदकः ॥ ५१ ॥

अविदुषामुपसर्गमथेदृशं
तरिषु सञ्चरतां बहुशो नृणाम् ।
रचितया विपदा न कमानशे
सदयतोदयतोदकरंहसा ॥ ५२ ॥

अधिनिशीथमकाण्डसमुच्चल-
ज्जलभरप्लवमाननिकेतना ।
सपदि कापि कृषीवलकामिनी
विपदमापदमा स्वतनूभुवा ॥ ५३ ॥

उरुरये भ्रमतोदकसंचये
तरुधिया कृषकेण च केनाचित् ।
शयुरगृह्यत जीवितरक्षण-
व्यसनिना सनिनादपयोहृतः ॥ ५४ ॥

१ दैवदुर्विलसितात्. २ 'गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते' इत्यमरः.
३ पर्वतात्. ४ उपद्रवम्. ५ उदयता उद्भवता. ६ अमेति सहार्थेऽव्ययम्. ७ अजगरः.

निशि झटित्यतिवृद्धतरङ्गिणी-
सलिलमग्नतनुर्ददृशे पुनः ।
[1]उपनदं करिणी धरणीरुहे
निगलिता गलितासुरहर्मुखे ॥ ५५ ॥

सलिलजालमभिन्न निरन्तर-
प्रसृमरं सरितामुदयद्द्रयम् ।
[2]उपरिसेतुगणं [3]पुरतोरण-
द्वयसमायसमायतमञ्जसा ॥ ५६ ॥

[4]द्रुविपिनैरुदयत्कलिकावृतै-
रविरलं शरणार्थिजनाश्रितैः ।
विविधशिल्पभृते[5]ऽपि तरीतते-
श्छविरसेवि रसे तटिनीगते ॥ ५७ ॥

विरतिमीयुषि वृष्टिविजृम्भिते
तदनु निर्भवनैरघनैर्जनैः ।
क्रमविलीनजले मृगमण्डली-
शववृते [6]ववृते वसुधातले ॥ ५८ ॥

भृशमदूयत भृत्यनिवेदितं
निशमयन्नवनीवलशासनः ।
अनुपमं तमुपप्लवमात्मनो
जनपदेऽन[7]पदेशदयानिधिः ॥ ५९ ॥

कथममुष्य वदानि वदान्यतां
धरणिपालमणेः शरणागतम् ।
अनुगृहीतमभूदथ सद्मभि-
र्धनचयेन च येन कुलं नृणाम् ॥ ६० ॥

---

१ नदीसमीपे, 'नदीपौर्णमास्याग्रहायणीभ्य' इति वैकल्पिकष्टच्. २ संक्रमगणम्. ३ पुरतोरणं प्रमाणमस्य तम्. प्रमाणे द्वयसच्. ४ १८२०१४२ इत्यतिगृष्टिसमासिकलिदिनसंख्यात्रोक्ता. ५ 'ऋते योगे द्वितीये'ति चान्दसूत्राद् द्वितीया. ६ वर्तनं कृतम्. भावे लिट्. ७ अव्याजकृपानिधिः.

हतशत्रवः क्षितिवृत्रभिदे जना
ददुरथाशिषमादरमेदुराः ।
चिरमियं धरणी परिपालिता
शुभवता भवता भवतादिति ॥ ६१ ॥

अकस्मादाधाय प्रळयभयमुच्चैर्दितिभुवा
हिरण्याक्षेणेव प्रतिभयतमेन क्षितितलम् ।
महावर्षेणाप्लावितमुदकराशावुदधर-
द्दयालुर्भूदारो[1] विधुरजनरक्षां विरचयन् ॥ ६२ ॥

नित्यं निर्मलधर्मकर्मभिरभद्रोपद्रवद्राविभि-
श्चिन्वन् पुण्यमगण्यमन्वहमिह श्राम्यन् जनश्रेयसे ।
कीर्त्त्या शारदपूर्णिमाहिमकरश्रीगर्वसर्वंकष-
स्फूर्त्या भूवलयं नृपो धवळयन् भेजेऽनिशं श्रीधरम् ॥ ६३ ॥

जातः केरलमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरलवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
सर्गोऽगादतिवृष्टिकष्टकलुषं राष्ट्रैकदेशं दृशो-
रग्रे जाग्रतमस्य वाग्विलसितैः कुर्वन् कृतौ षोडशः ॥ ६४ ॥

इति श्रीविशाखविजये षोडशः सर्गः



सप्तदशः सर्गः.

श्रियः प्रियं श्रितजनशोकसञ्चय-
च्छिदाविचक्षणचरणाम्बुजद्वयम् ।
अनुस्मरन्ननुपमभक्तिरात्मवान्
नृपोऽनिशं कुशलमपोषयन्नृणाम् ॥ १ ॥

१ भूर्दारा जाया यस्य सः राजा, अथ च महावराहः.

प्रजाहिते विमुखतमैरमानि यत्
　स्वजन्मनः फलमिह केवलं नृपैः।
अविश्रमं [1]प्रकृतिकृते कृतश्रमो
　विशाखराट् तदखिलमत्यजत् सुखम् ॥ २ ॥

प्रवर्तयत्यतिकुशले परिष्कृती-
　रनेकशो निजकुशलप्रयोजिकाः ।
प्रजा यथा निरु[2]पधि सौहृदं दधौ
　नराधिपे न खलु [3]तथा पितर्यपि ॥ ३ ॥

अशान्तया मलिनधियो धनाशया
　विशाखभूवलमथनोऽधिकारिणः ।
विशृङ्खलान् विरचयतो जनव्यथां
　भृशं खलानकृत [4]पदे सशृङ्खलान् ॥ ४ ॥

दुराशया कतिचिदिहाधिकारिणो
　[5]दुराशया विविधजनाधिकारिणः ।
[6]क्ष्माभृताप्यनयपरम्पराहता
　क्षमाभृता सपदि पदान्निराकृताः ॥ ५ ॥

[7]अशीतकान् प्रशमवशीकृतात्मनः
　सुशीलताशिशिरितसज्जनाशयान् ।
महीपतिर्द्रुतमधिकारधूर्वहान्
　महीयसीष्वपि च गतिष्वतिष्ठिपत् ॥ ६ ॥

प्रशासति क्षितिवलयं विचक्षणे
　विशामधीशितरि विशाखभूभृति ।
दिशामशोभिषत मुखानि तद्यशो-
　निशाकरप्रसृमरकौमुदीभरैः ॥ ७ ॥

---

१ प्रजार्थे. २ निर्व्याजम्. ३ राज्ञि प्रजा यथानुरक्ता, तथा न पितर्यपीत्यर्थः. ४ चरणे. ५ दुष्टचित्ताः. ६ विविधान् जनानात्माधीन् मनोव्यथाः कर्तुं शीलमेषामिति तथा. ७ क्षान्तिमतापि. ८ दक्षान्.

विलोकनात् कमलविलोचनार्चना-
विलोपिताखिलशमलस्य भूपतेः ।
विलोचने सफलयितुं विदेशतः
सुलोकसंसदिह सलोभमासदत् ॥ ८ ॥

उपागतान् स्वपुरमुदारताजित-
द्युपादपस्सपदि विपश्चितो बहून् ।
अपारधीतुलितगुरूनतोषय-
न्नृपालकः पटधनभूषणादिभिः ॥ ९ ॥

क्षितिक्षिता श्रितजनमन्तुसन्तति-
स्तितिक्षिता स्खलितकृता कृपावता ।
अमृष्यतः पुनरविनीतिचोदिता-
ममुष्य तां हृदि न दया दधे पदम् ॥ १० ॥

अधृष्यतां दधदथ चाभिगम्यता-
मिहोष्मणा सरळतया च भूमिभृत् ।
भयप्रदः प्रमदभरप्रदोऽप्यभू-
द्दवाग्निनेव च सरितोपजीविनाम् ॥ ११ ॥

महीपतेरनुपमितां मनीषिता-
मभीप्सतः प्रतिदिवसं प्रयस्यतः ।
सहर्षमन्वहरत सञ्चयो नृणां
जनाधिपं खलु जनतानुवर्तते ॥ १२ ॥

पुरा निराकृतगुरुशासनाः प्रति-
प्रतोलि केलिभिरभितो विनोदिनः ।
कुमारकाः सततकरस्थपुस्तक-
प्रपाठिनः पुनरधुनालुलोकिरे ॥ १३ ॥

१ मांषता. २ उग्रशासनतयेत्यर्थः. ३ राजा पर्वतश्च. ४ 'यथा राजा तथा प्रजाः'.

जगत्यधीश्वररतियोगमोमुदत्-
सरस्वतीदुहितृसमानताञ्चिताः ।
कुमारिकाः [1]कृतचतुराननादराः
सपुस्तकाः प्रददृशिरे प्रतोलिषु ॥ १४ ॥
विशाखराट् [2]प्रतिशरदं सुधारस-
प्रसाधितैः सुविशदगो[3]कदम्बकैः ।
व्यकासयत् पठितृजनस्य मानसं
[4]कलानिधिः कुमुदमिवोदयद्रुचि ॥ १५ ॥
कुमारसञ्चयमयमादरोद्धुरः
परीक्षितं प्रकटितपाठपाटवम् ।
मनोज्ञपुस्तकसुखपारितोषिकै-
रुदीर्णसम्मदमुदसाहयत्तराम् ॥ १६ ॥
अनन्यराट्सुलभविशेषवैदुषी-
सहासिकासुभगविनीतिसम्पदा ।
निरन्तरं निजविषयाधिवासिनां
वसुन्धरावलमथनो मनोऽधिनोत् ॥ १७ ॥
सुशीलतालसितसुधीत्वशालिना
सुगन्धिसुन्दरमणिरम्यताभृता ।
विदेशजा अपि विपुलावलारिणा
विपश्चितोऽद्भुतभरिता वितेनिरे ॥ १८ ॥
कुतूहलात् कवितिलकेन [5]केनचित्
सुदूरदेशजसुहृदार्थं नाथितः ।
सुधीरयं स्वयमलिखद्विशाखरा-
डविस्तरं निजचरितं रसोत्तरम् ॥ १९ ॥

---

१ कृतश्चतुराननस्य विदुषो ब्रह्मणश्चादरो याभिस्ताः. २ प्रतिवर्षं प्रतिऋतुविशेषं च. ३ गोशब्दो वाचि किरणे च. ४ विद्यानिधिश्चन्द्रश्च. ५ Mr. Patrick McGuire इतिनामवता.

अतन्द्रितस्समयमयत्नमात्मवान्
सदेति सद्व्यवसितिभिर्नयन्नयम् ।
सगर्भ्ययोः प्रथममथामयाविनं
विलोक्य भूवलभिदभूद्विषण्णधीः ॥ २० ॥

तदामयं शमयितुमेष भूरिश-
श्चिकित्सकानतिचतुरानथादिशत् ।
सहोदरप्रणयवशंवदाशयो
व्यधापयत् बहुविधशान्तिकान्यपि ॥ २१ ॥

निरस्यतो गदशमकारि भेषजं
चिकित्सकेरितमपि पथ्यमुज्झतः ।
सरोगता समुपचिता क्रमादगा-
दसाध्यतामवनिभृदग्रजन्मनः ॥ २२ ॥

कृपाकुलः सकलसचेतनेष्वपि
स्वभावतः स खलु विशाखभूपतिः ।
प्रतिक्षणैधितरुजमग्रजं निजं
निरीक्ष्य तं भृशमनुशोकमानशे ॥ २३ ॥

विचारवान् सहजनिवासवेश्मन-
स्समदेशगां नृपतिरथोपकारिकाम् ।
उपेयिवानधिवसति स्म पञ्चषा-
ण्यहानि हा निरवधिकाधिदूनधीः ॥ २४ ॥

नृपेण तच्चरमगतिप्रतीक्षिणा
प्रतिक्षणोल्बणलयलक्षणेक्षिणा ।
अनादृताशनशयनादिना पुन-
र्दिनान्यनाषियत विनान्यचिन्तनम् ॥ २५ ॥

१ सोदरयोः. २ बहुविधानि रोगशान्तिफलानि कर्माणि.

विशाखभूरमणमणेस्तमग्रज
　　भृशायितामयमपरेऽपि बान्धवाः ।
विशां पतिं दशमिनमन्वये निजे
　　विशालया मनसि शुचोपतस्थिरे ॥ २६ ॥

समं[1] ततो दिनपतिनास्तमीयिवा-
　　नहन्यवस्यति कुलशेखराग्रजः ।
समन्ततो मिलितसशोकबन्धुता-
　　मनस्सरोरुहनिवहं निमीलयन् ॥ २७ ॥

न पूरयेत् किमिह वयांसि षष्टिम-
　　प्यसौ तदा खलु कलयेयमुत्सवम् ।
स्पृहामिमां बत वितथां ममातथा
　　विधे किमित्यथ विललाप भूपतिः ॥ २८ ॥

अनाहितक्षितिभरणेऽपि पूर्वजे
　　परासुतां गतवति पार्थिवाग्रणीः ।
विसर्जयन् बहु धनमौर्ध्वदेहिकान्
　　विधीनसावथ निरवर्तयत् सुधीः ॥ २९ ॥

अतर्किताग्रजमृतिदुःखितः पुरी-
　　मुपेयुषस्सहृदयितस्य भूपतिः ।
अपारयत् प्रियसखम[2]द्रभृत्प्रभो-
　　र्यथोचितां विरचयितुं न सत्कृतिम् ॥ ३० ॥

समेयिवानथ पृथिवीभुजा निजं
　　निकेतनं कदनवतापि सादरम् ।
सवल्लभः प्रतिजगृहे सुहृत् सह
　　स्वकान्तया स्वसृतनयायुगेन च ॥ ३१ ॥

१ (दिनपतिना) समं सह तुल्य च. साम्य च विशिष्टसरोरुहनिवहमीलनकर्तृत्वा[illegible]

२ Sir M. E. Grant Duff नामकस्य.

नृपस्वसृप्रथमतनूजया[1] प्रभो-
बभूव सल्लँपितममुष्य तत्तदा ।
यतोऽचिरात् सहसहजेयमीक्षितुं
शशाक रक्षितममुना पुरोत्तमम् ॥ ३२ ॥

प्रसङ्गतः क्वचिदथ लेखने पुरा
धराभुजा बुधजनपक्षपातिना
निवेदितां स्वयमवगम्य केरळ-[2]
प्रवीणतां प्रमदमसावधात् सुधीः ॥ ३३ ॥

मनीषिणा गुणनिधिना महीभुजा
प्रजागुणप्रवणहृदा प्रवर्तिताः ।
परिष्कृतीः पथिपथि वीक्ष्य नीवृति
प्रहृष्टधीरजनि स हूणपुङ्गवः ॥ ३४ ॥

ततः स भूतलवलभित्[3] पितृक्रियाः
समाप्य निर्गतवति मद्रभर्तरि ।
अदूरतो नगरवरस्य पूर्वदि-
ग्गतं ययावुपपुरमापगातटे ॥ ३५ ॥

वनान्तरस्थितमवनीवनावनः
स्थलान्तरं[4] किमपि ततोऽयमीयिवान् ।
निरन्तरप्रसृमरनिर्झरस्फुर-
त्तरङ्गिणीसविधशिवालयोज्ज्वलम् ॥ ३६ ॥

ततोऽगमत् किमपि स मौक्तिकाकर-
प्रतीतिमत् क्षितिधरकूटमुन्नतम् ।
तुषारशीकरसुकुमारमारुत-
प्रसारदूरितदिनयामिनीभिदम् ॥ ३७ ॥

१ लक्ष्मीनाम्न्या वञ्चिमहाराज्ञ्या. २ केरलस्य तन्नामकस्यैतत्काव्यकवेः. ३ महीन्द्रः. ४ तिप्परप्पुनामकम्.

नितम्बलम्बितनिबिडाम्बुदच्छटा-
करम्बितद्रुमनिकुरुम्बकुम्बितम् ।
समन्ततोऽम्बरमवनीधरस्य ता-
मधित्यकामधिवसतेऽस्मि भूक्षिता ॥ ३८ ॥

पथि व्रजन्नथ पृथिवीपती रथी
दिवस्पतेर्दिशि दिवसागमात् पुरः ।
व्यलोकयत् स कमपि केतुमभ्रमु-
ग्रियोदयद्वमथुसमोन्नमत्प्रभम् ॥ ३९ ॥

भयावहः स्वहृदयजाग्रदागसा-
मसौ नृणामनिशमनर्थशङ्किनाम् ।
अपाप्मनः पुनरतनिष्ट केवलं
महीपतेर्मनसि महत् कुतूहलम् ॥ ४० ॥

विशुद्धमारुतमनुभूय भूधर-
प्रदेशतः प्रगुणशरीरसौख्यभाक् ।
स्वमादरात् पुरवरमागमत् क्षमा-
सुमाशुगः सुजनसमाजपूजितः ॥ ४१ ॥

अथाश्विने सरसिजनेत्रयात्रया
यदृच्छया व्यतिक्रान्तमत्र हायने ।
अजूघुषत् पुरि नवरात्रभारती-
समर्चनोत्सवमवनीशपुङ्गवः ॥ ४२ ॥

तदन्तरे धरणिपुरन्दरः पुरी-
मुपेयुषा मणिवणिजोपढौकितम् ।
अनर्घमाभरणगणं स्वबान्धवै-
रवैक्षताद्भुतभरितैः समन्वितः ॥ ४३ ॥

१ आच्छादितम्. २ घोषितवान्. ३ नवानां रात्रीणां समाहारो नवरात्रं, तत्र यो भारत्याः सरस्वत्याः समर्चनोत्सवस्तम्. ४ उपहृतम्.

प्रसारितान्यवनिमरुत्वतः पुरः
परार्ध्यभूषणपटलानि पश्यताम् ।
अपारविस्मयरसपूरसागरे
निमज्जतामनिमिषतोचिताजनि ॥ ४४ ॥

नृपेण तद्वणिगुपदीचिकीर्षितं
विभूषणं निरुपमरामणीयकम् ।
स्व्यकारि न स्वगरिमरक्षणैषिणा
मनीषिणां द्रविणतृणीकृतिर्गुणः ॥ ४५ ॥

विभूषणेष्वनणुगुणेषु तेष्वसा-
वदूषणान्यथ मणिदोपविन्नृपः ।
उदारताधरितसुरद्रुरात्मने सुहृ-
ज्जनाय च कतिचित्तु चिक्रिये ॥ ४६ ॥

अथात्मसात्कृतमनयेन मादभू-
भृता चिराज्जनपदभागमात्मनः ।
प्रतिप्रपन्नवति सतीह मद्रभृ-
न्मतात् क्षितिक्षिति मुमुदेतरां जनैः ॥ ४७ ॥

अभूदभीप्सितविजयस्य कारणं
यदीयधीविलसितमेव केवलम् ।
तमञ्जसा समभिननन्द सम्मदात्
तदा जनः क्षितिरमणं च मन्त्रिणम् ॥ ४८ ॥

समागमत्तदनु कलाविलासिनं
विशाखभूशशिनमखण्डमण्डलम् ।
विलोकितुं प्रियसुहृदस्य मद्रभृ-
त्सखस्स कश्चन चतुरोऽन्तरीपजः ॥ ४९ ॥

१ पक्ष्मपरिस्पन्दशून्यता मत्स्यता च. २ प्रतिलब्धवति. ३ Mr. D. F. Carmichael नामा.

महीपतेः प्रकटयितुं जयोत्सवं
　प्रवर्तिते सदसि तदा महाजनैः ।
सभाधिपास्पदमिदमर्थितोऽभज-
　न्निजप्रभुप्रियसरळम्स केरळः ॥ ९० ॥

तमन्तरीपजमतिथिं सवल्लभं
　निमन्त्र्य केरळमपि मित्रमादरात् ।
सनन्दनस्सहमचिवोऽथ पार्थिवो
　विनिर्ययौ नगरवरात् पुरान्तरम् ॥ ९१ ॥

कुतूहलोत्तरळितपौरमेत्य तत्
　पुरं सरःपरिसरशोभि मन्दिरम् ।
धराधिराडधिवसति स्म बान्धवै-
　स्ततस्ततस्समुपगतैस्समाजितः ॥ ९२ ॥

समत्सरास्तरणिभिरेत्य नाविका
　जिघृक्षवः क्षितिपतिपारितोषिकम् ।
पुरो महासरसि तदीयसज्जनो
　वितेनिरे निजपटिमप्रदर्शनम् ॥ ९३ ॥

अथापरेऽहनि स विहारकाम्यया
　बहिर्गतो महति समे महीतले ।
प्रवर्तितैर्नरतुरगप्रधावना-
　द्यनेकनर्मभिरभवद्विनोदितः ॥ ९४ ॥

चमूचराधिपतिषु लक्ष्यवेधिनां
　गणे तदा परिगणनेन केरळम् ।
नृपः स्वसम्मतनलिकायुधक्रिया-
　पटुत्वमेधितबहुमानमाधित ॥ ९५ ॥

१ एभिर्महाजनैरर्थितः. २ एतत्काव्यकविः. ३ पूजितः. ४ नौभिः. ५ विहरणेच्छया. ६ एतत्काव्यकविम्.

सहाबलाः कतिचिदथान्तरीपका
विशारदा भृशमभिनीतिरीतिषु ।
निशि क्षितीश्वरमभिरूपरूपक-
प्रयोगपोषितपरितोषमादधुः ॥ ५६ ॥

स मद्रभृत्सचिवसभाजनाय तत्-
पुरीगतान् पुनरथ हूणपुङ्गवान् ।
अतर्पयन्महिततरेऽशनोत्सवे
परिस्रुतामृतरसया[1] परिस्रुता ॥ ५७ ॥

अथातिथीनकृत चमत्कृतान् स ता-
नलं जलप्रतिफलनद्विरुक्तया ।
तटागतल्पजतटनड्वलस्थल-
प्रयोजितज्वलनविधानशोभया ॥ ५८ ॥

विनिर्ययावनुमतिमाप्य भूभृत-
स्ततः पुरान् महमहजोऽथ केरलः ।
प्रसिद्धकेरलपुरसङ्गवासिनो
निषेवितुं निखिलनिलिम्पनायकान् ॥ ५९ ॥

अनन्तपूर्वकपुरमेत्य कृत्यवित्
प्रणम्य मातरमपि तत्कनीयसीम् ।
सपर्ययाकृत शैरजन्मनो[3] मुदं
स वर्यया श्रितहरिगीतवेश्मनः[4] ॥ ६० ॥

ततोऽपरानपि सुहृदां गतो गृहा-
नकृत्रिमप्रमदमदैस्समादृतः[5] ।
स वञ्चिमण्डलमतिलङ्घ्य नीवृतं
समासदन्निजमथ पर्पनामकम् ॥ ६१ ॥

१ क्षरितसुधारसया. २ मयेन. ३ स्कन्दस्य. ४ हरिगीते 'अरिप्पाट् टु' इति भाषायां प्रसिद्धे पुरे वेश्म गृहं श्रितं येन तादृशस्य. ५ अस्माभिः सुहृद्भिः समादृतः.

मनोज्ञतज्जनपदनाथमग्रजं
निजं पुरस्कृतवति तत्र केरळे ।
सतीर्थ्यतां दधति स रामवर्मरा-
ऽतीव सत्कृतिमततास्य मातुलः ॥ ६२ ॥

प्राज्याः श्रीवञ्चिराज्या दयिततम इति श्रीविशाखस्य विश्व-
ख्यातस्याव्याजमैत्रीपदमिति कविताचुञ्चुरित्यञ्चितोऽयम् ।
अत्रत्यैर्मान्यलोकैर्हरिहरतनयं पूर्णकेतक्यधीशं
सेवित्वा दैवतं स्वं मुदितमतिरतस्साग्रजो निर्गतोऽभूत् ॥ ६३ ॥

वन्दित्वा गुरुवायुनन्दिरपतिं शौरिं कुरुम्बेश्वरी-
मम्बां मण्डितमाटमण्डलमथ श्रीकण्ठमप्यध्वनि ।
वञ्चिक्ष्मां पुनरेत्य शीघ्रमनमच्छ्राम्नाल्याधीश्वरं
राज्ञीजानिरसौ परानपि पडङ्कूरेश्वराद्यान् सुरान् ॥ ६४ ॥

इति प्रायो मासद्वयमयमटित्वा जनपदान्
पुनः स्यानन्दूरं पुरवरमुपेतः प्रमुदितः ।
महाराजं राज्ञीं युवनरवराद्यांश्च सुहृदः
स्वयात्रावृत्तान्तैरतनुत नितान्तं कुतुकितान् ॥ ६५ ॥

सुहृदुदितमुदीच्योदन्तमुच्चावचं तं
निखिलमपि निशम्योन्निद्रतद्दिग्दिदृक्षः ।
अवसरमनुकूलं श्रीविशाखः प्रतीक्ष्य
प्रतिदिनमकृत श्रीपद्मनाभस्य सेवाम् ॥ ६६ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
भ्रातृस्वर्गतिदूननतृवावधव्यापारसम्पूरित-
स्सर्गस्सप्तदशस्समाप्तिमगमत् काव्ये प्रणीतेऽमुना ॥ ६७ ॥

इति श्रीविशाखविजये सप्तदशः सर्गः ।



१ तनुते स्म. २ उत्पन्नोत्तरदिग्दर्शनेच्छः.

## अष्टादशः सर्गः

श्रियमनुपमधर्मकर्मभिः
समुपचितामयमुत्तरोत्तरम् ।
अकुरुत नृपतिः समर्पिताम्
नरकरिपोश्चरणारविन्दयोः ॥ १ ॥

भुजगभजनिजाग्रजार्जितं
निखिलमपि द्रविणं सुकर्मसु ।
अतुलितधिषणो विशाखरा-
ड्विविधतरेषु स विन्ययोजयत् ॥ २ ॥

धनचयनमभूत् परेयुषो
भृशमयशस्करमग्रजस्य यत् ।
अजनि तदुरुकीर्त्तिकारणं
विनगणशालिविशाखभूपतेः ॥ ३ ॥

प्रतिमममुनैव निश्चिता-
न्नियतनवनादीवकं किमप्यसौ ।
स्वसुखविषयकव्ययाय न
प्रतिजगृहे मतिमान् महीपतिः ॥ ४ ॥

अनवधिधनसञ्चयव्यय-
प्रकटितमाङ्गलिकोत्सवोज्ज्वलम् ।
उपनयनमसावकारयत्
तदनु कुमारकरामवर्मणः ॥ ५ ॥

विबुधपरिवृतं सुधाञ्चितं
सुरसदनोपमरामणीयकम् ।

---

१ प्रतिवर्षम्. २ राजकुमारस्य रामवर्मनामकस्य. ३ विबुधेति विद्वद्देयोवः
४ सुधेति चूर्णामृतयोः.

[1]उपचितवसुसिद्धशोभया
रुचिरमराजत राजमन्दिरम् ॥ ६ ॥
क्षितिवल्लभशासनेन सादरं
सपदि [2]सर्वे सुहृदो निमन्त्रिताः ।
प्रमदतरलिताः समागमन्
नगरवरं प्रकटीकृतोत्सवम् ॥ ७ ॥
स्फुरदुरुमणिदीपजालया
[3]सुरुचिरचित्रविचित्रजालया ।
नृपभवनमशोभि शालया
विरचितया सविधे विशालया ॥ ८ ॥
अनुपमसुषमोऽत्र मण्डपो
मुकुरशतप्रतिबिम्बिताकृतिः ।
प्रतिकृतिभिरसङ्ख्यतां गतः
कमिव न विस्मितमातनोज्जनम् ॥ ९ ॥
अदधुरिह नराः परस्पर-
प्रतिफलदुज्ज्वलदर्पणोत्करैः ।
शमनसुतसभान्तराहित-
भ्रमभरकौरवराड्विडम्बनां ॥ १० ॥
सललितमिह सालभञ्जिका-
समुदयमद्भुतशिल्पकल्पनम् ।
अनिमिषनयनेन पश्यता
तरुणगणेन [4]विसिष्मियेतराम् ॥ ११ ॥
अविरतमधिवासनाद्दिशां
भ्रमरसमूहमपि भ्रमाकुलम् ।

---

१ उपचितैर्वसुभिर्धनैः सिद्धा सम्पन्ना या शोभा तया. अथ च उपचिता वसूनामष्टानां सिद्धानां च या शोभा तया. २ सर्वे. ३ सुरुचिरैश्चित्रैरालेख्यैर्विचित्राणि जालानि गवाक्षविशेषा यस्यां तया. ४ अतिशयेन विस्मितम्.

विदधुरिह गता वितानतां
पटघटिता नवपुष्पवल्लयः ॥ १२ ॥
दिगधिपतिविमानतारका-
निकरवतीं निरवर्णयन् नरः ।
उपरि दिवमिवोपजग्मुषी-
मुपनयनोत्सवकौतुकात् सभाम् ॥ १३ ॥
अमृतसमरसान्नभोजना-
दमितमुदामवनीदिवौकसाम् ।
अजनि परिषदाभिनन्दितो
भृशमिह भूपगृहे महो महान् ॥ १४ ॥
अहनि निजगृहे कुटुम्बिनां
कृपणतया सकृदल्पभोजिनाम् ।
द्विरभवदिह तु त्रिरप्यहो
चतुरपि चाभ्यवहारधोरणी ॥ १५ ॥
ततघननिनदेन देहिनां
जनितचमत्कृतिरेधयन् रसम् ।
बहुनिशमितनीलकण्ठवाग्
जलधरकाल इवोत्सवोऽभवत् ॥ १६ ॥
क्षितिपतिगृहभित्तिमण्डली-
विलिखितचित्रकुलावलोकिभिः ।
विविधतरविनोदमोदितै-
र्दिवसमनायि निमेषवज्जनैः ॥ १७ ॥
निशि पुनरधिशालमप्सर-
स्समुदयरूपमदच्छिदाचणः ।

१ ततस्य वीणादिवाद्यस्य घननिनदेन सान्द्रध्वनिना, अथ च विस्तृतमेघध्वनिना.
२ प्रीतिं जलं च. ३ नीलकण्ठेति तन्नामा सर्वाधिकारी, मयूरश्च.

नटनमनुपमानमञ्जिम
व्यतनुत वारविलासिनीगणः ॥ १८ ॥

मदकलकलकण्ठकाकली-
कलमुरलीनिनदानुगायिना ।
अमृतरसझरीपरिप्लुता
युवतिजनेन विनेनिरे नराः ॥ १९ ॥

इति महितमयोपयत्तमां
क्षितिमघवा स महं महामतिः ।
प्रतिनवबहुपारितोषिकै-
रतिमुदितं विदधत् सुहृज्जनम् ॥ २० ॥

नरपतिरथ भारतेश्वरी-
प्रहितमसौ बहुमानलाञ्छनम् ।
समविजिगमिषत्सुदित्वर-
त्वरमभिमद्रपुरं विनिर्गतः ॥ २१ ॥

अथ बत विरतिं महोत्सवे
गतवति तैलवनाधिपानुजः ।
हतविधिसहसाकुलाद् गदा-
दतिविधुतां व्यधित स्वबन्धुताम् ॥ २२ ॥

सकलजनहितः स पण्डितः
क्षितिपतिबन्धुरभव्यशङ्किभिः ।
अधिगतगदमूर्च्छनः पुरात्
त्वरितमनीयत राजपूरुषैः ॥ २३ ॥

अपि निपुणतरैर्भिषग्वरै-
रथ बहुधा कृतरुक्प्रतिक्रियः ।

१ भारतनक्षत्रबिरुदम्.

अहह स भवितव्यताबला-
दधिपथमाप कथावशेषताम् ॥ २४ ॥
अविदिततदभद्रवार्तया
सपदि ततोऽनुजयानुयातया ।
नरपरिवृढयान्वगम्यत
प्रियतमसेवितया स्वमातुलः ॥ २५ ॥
क्षितिपतिभगिनीतनूभवे
प्रतिपथमद्रिवनानि भूरिशः ।
अपरिचितचराणि विस्मया-
दकलयतां शिबिकोत्तमस्थिते ॥ २६ ॥
वनकरिचरणाङ्कचिह्निते
खगकुलसङ्कुलभूरिभूरुहे ।
पथि चलितमदोनुयायिना
युवतिजनेन सभीतिकौतुकम् ॥ २७ ॥
अधिपदवि नराधिनायिका
बहुमृगवासमहावनावृतम् ।
अटितचरमलोकत स्थलं
निजपतिना मृगयाविनोदिना ॥ २८ ॥
हरिहरसुतमार्यकानन-
प्रथितनिकेतनमण्डनायितम् ।
अधिसरणि वसुन्धरेश्वरी
सहसहजाथ नमस्यति स्म सा ॥ २९ ॥
विकटगिरितटाग्रनिर्गळ-
न्निरुपमनिर्झरदर्शनीयया ।

१ वञ्चिमहाराज्ञ्या. २ मद्रपुरीं गच्छन् विशाखमहाराजः. ३ एतत्काव्यकविना. ४ शास्तारम्.

अभजदियमलं कुतूहलं
　　शुभजलया सरिताथ चित्रया[1] ॥ ३० ॥
पथि किमपि विलम्ब्य पार्थिव-
　　प्रवरमथागतमापगान्तिकम् ।
धृतकुतुकमवन्दतावनी-
　　कलशपयोधिसुता महानुजा ॥ ३१ ॥
क्षितिपतिरनुजाप्रियानुगां
　　स्वसुतनयामथ तामनुव्रजन् ।
सुतयुतदयितान्वितो द्रुतं
　　नगरमटीकत शालिवाटिकाम्[2] ॥ ३२ ॥
विहितबहुमतिर्महाजनै-
　　रिह स महीमघवा सबान्धवः ।
हुतवहशकटं विशङ्कटं
　　त्वरितमितो निरगादधिष्ठितः ॥ ३३ ॥
मरुदुरुतरसा महानसा[3]
　　सुखमथ सञ्चरमाणयोस्तयोः ।
नरवरभगिनीतनूजयो-
　　र्हृदि न मुदद्भुतयोरमाद् भरः[4] ॥ ३४ ॥
क्षितिपतिकुलमौलिरागत-
　　स्तदनु पुरं नरसिंहनामकम्[5] ।
मठपतिकृतसत्कृतिं सुहृ-
　　त्सहित उरर्यकरोद्दरीयसीम् ॥ ३५ ॥
अथ महितमतौ महीपतौ
　　गतवति मद्रपुरं सहानुगे ।

---

१ चित्रानद्या त्रिकूटाचलप्रभवया. २ Tinnevelly. ३ महाशकटेन. ४ सन्तोषाश्चर्ययोः. ५ Narasingpore.

तदधिपतिरुपेत्य सत्क्रियां
प्रियसुहृदस्स्वयमाचरत्तराम् ॥ ३६ ॥

रथवरमधिरुह्य रामरा-
ड तुलकुतूहलमीक्षितो जनैः ।
अगमदथ[1] महोपकारिकां
कृतललितप्रातिकर्मनिर्मलाम् ॥ ३७ ॥

गुणगणचणचक्रवर्तिनी-
बहुमतिभाजनतां गता सती ।
कुतुकमतितरां पुरौकसा-
मकुरुत केरलवर्मवल्लभा ॥ ३८ ॥

पवनमुहृदनो विहाय सा
प्रियसखमाधवराजमानिता ।
उदवसितमगात् सवल्लभा
भगिनिकयानुगता रथस्थिता ॥ ३९ ॥

श्रुतचरतदफल्गुसद्गुणै-
रकलि जनैर्हृदयेन यादृशी ।
तदधिकगुणमा क्षमारमा
नयनपथस्य तदातिथीकृता ॥ ४० ॥

नगरवरगतं वसुन्धरा-
नमुचिरिपुं बहवोऽथ सूरयः ।
सविनयमुपगम्य सम्मदं
दधुरतिमात्रममुष्य सूक्तिभिः ॥ ४१ ॥

समुदयमधिकं मनीषिणां
समुदयमागतमालुलो[2]

१ अग्निशकटम्. २ आलोकितुमिच्छुम्.

अमदयत निर्जरकृत्रिमै-
    रमदयतात्मजनाग्रणीर्गुणैः ॥ ४२ ॥

स्वदयितसहिता महीपति-
    स्वसृदुहिता बहुभिर्महात्मभिः ।
मुहुरिह मुदितैस्समागतै-
    स्सह सहसैव बबन्ध सौहृदम् ॥ ४३ ॥

विषधरभजभूमिजन्मभि-
    स्सचिवपदस्थितिकाङ्क्षिभिस्तुतम् ।
उपगतमिह शेषशायिनं
    पुनरियमैक्षत सप्रिया तदा ॥ ४४ ॥

नियतिबलवशात् स्वमन्त्रिता-
    समयवियोजितमेष सन्मतिः ।
मिथुनमिह पुनर्यथातुरं
    मिलितमवेक्ष्य समाश्वसीत्तमाम् ॥ ४५ ॥

निजनिलयमवाप्य मद्रभृन्
    प्रियतमया तनयासमेतया ।
मुदमभजत मानितादरा-
    दथ कुलशेखरसोदरीसुता ॥ ४६ ॥

तदनु सहजया प्रियेण च
    क्षितिकमला जलराशितीरगं ।
तदुदवसितमेत्य संप्रियां
    सरममवैक्षत मद्रभृत्प्रियाम् ॥ ४७ ॥

स बहुमति मनीषिणा मही-
    पतिरथ मद्रभृता निमन्त्रितः ।

१ अमदा ये यतात्मानो वशिनो जनास्तेषामग्रणीः. २ पुरेव. ३ प्रियसहिताम्.

अधिनिशमदसीयमासदत्
सदनमनुत्तमकामनीयकम् ॥ ४८ ॥

उपचितकुतुकं नृपस्त्रिया-
वपि सविशेषसुवेषपेशले ।
क्षितिभृदनुमते समागते
सममिह केरलवर्मणा क्षणात् ॥ ४९ ॥

नवनवबहुवेषधारिणो[1]
युवतिगणेन सहैव तादृशा ।
पवनरयहयैरदो रथै-
र्भवनमहासत हूणपुङ्गवाः ॥ ५० ॥

विविधतरविचित्रभूमिका-
कलनतिरोहितवास्तवाकृती ।
इह मुहुरपि हूणदम्पती
सदसि न हन्त मिथोऽभिजज्ञतुः ॥ ५१ ॥

निरुपमरुचिदीपसञ्चय-
प्रगुणितकान्तिविचित्रकञ्चुकाः ।
सुचिरमतिथयोऽत्र नर्मभिः
प्रमुमुदिरे मदिरेक्षणान्विताः ॥ ५२ ॥

गजपतिगतया स्वकान्तया
गजपतिराजमुधीरिहागतः ।
समजनि मुदितः क्षमापति-
स्वसृदुहितृद्वितयावलोकनात् ॥ ५३ ॥

नरपतिदयिता परं सद-
स्तदिदमवाप्तमपारयन्त्यहो ।

---

१ वेषान्तरेणापह्नुतस्वरूपाः. २ प्रासाः ओहाङ्गताविति धातोर्लुङ्.

किमभजत शुचोऽथवा मुदः
　किमु न वेद्मि कदाप्युदात्त वा ॥ ५४ ॥
मलिनंनगरमही[illegible]शाना
　[illegible]कु[illegible]ल्लिमालिका ।
यदि न[illegible]मलका[illegible]त् मदः
　किमिन[illegible]दम् ॥ ५५ ॥
तदनु देशिनीं निशीथिनी-
　मवनिदिवस्पतिराकलय्य सः ।
त्वरितमनुगतैः सुहृज्जनै-
　स्त्वरमतिमेत्य मुहूर्तमस्वपीत् ॥ ५६ ॥
मणिवणिगधिनायकापणं
　गुणगणवारिधिरेत्य वज्रिराट् ।
धनविनिमयलब्धसाधनै-
　रनवतमेरथिनोत् सुहृज्जनम् ॥ ५७ ॥
क्षितिसरसिरुहालयापि सा
　पतिसहिता महितापणावली ।
सकुतुकभरमेत्य विक्रय-
　व्यमनिवणिग्जनमोदमादधे ॥ ५८ ॥
अहिनकुलमुलूकवायसं
　हरिणतरक्षु न यत्र संगतम् ।
वसति बदरिकाश्रमोपमं
　कनकवनं तदपश्यदेत्य सा ॥ ५९ ॥
विपुलवलविशालवालधिं
　मृगमिह कञ्चन चित्रचङ्क्रमम् ।

१ दुरासदम्. २ [illegible]. ३ P. Orr & Sons'. ४ एतदादौ पदत्रये 'येषां च विरोधः शाश्वतिकः' इति द्वन्द्वः. ५ परस्परगाढमैत्री सौहृत्त्यं प्राप्तम्

अपि च कपिवरस्य चापला-
न्यभजदवेक्ष्य विलक्षतामियम् ॥ ६० ॥

प्रतिभटपटलीभयावह-
प्रहरणसञ्चयमेदुरोदरम्[1] ।
निलयमियमियाय सप्रिया
नियमविधायिसमाजसद्म[2] च ॥ ६१ ॥

अधिनिशमथ मन्दिरं[3] महत्
सह दयितेन गतायतेक्षणा ।
मुकुरनळिकया[4] व्यलोकयद्
ग्रहनिवहं बहुविस्मयावहं ॥ ६२ ॥

क्वचन निशि नृपोऽथ मद्रभृत्-
सचिववरस्य गृहं सुहृन्मणेः ।
अगमदिह तदाभिळंख्ययो
निजसचिवा दधतस्सतीर्थ्यताम् ॥ ६३ ॥

धीमान् स माधवविभुस्सुमुखस्सुभाषी
सारल्यसारभरितस्स च शेषशास्त्री ।
गम्भीरधीरितरधीरपि राममन्त्री
सूर्येन्दुवह्निसदृशाः प्रचकाशिरेऽत्र ॥ ६४ ॥

सर्वज्ञशेखरमणिर्[5]विबुधानशेषा-[6]
नानन्दयन्नथ स वञ्चिवसुन्धरायाः ।
राजाभजत्[7] कलितकौतुकतामतीव[8]
तारापरिग्रहणमाङ्गलिकोत्सवाय[9] ॥ ६५ ॥

१ Arsenal. २ Legislative Council. ३ Observatory. ४ Telescope. ५ सर्ववेदिनां श्रेष्ठः अथच शिवचूडामणिः. ६ विदुषो देवांश्च. ७ राजा भूपश्चन्द्रश्च. ८ कौतुकं कौतूहल उद्वाहसूत्रं च. ९ ताराशब्दो नक्षत्र-विरुदे चन्द्रपत्न्यां च.

हीराङ्कूरकरम्बिताद्भुतमणिस्फाराभतारामयीं
मुद्रां मद्रभृताथ तां सबहुमानोद्रेकमौढौकिताम् ।
शक्ता वक्षसि नैव योक्तुमभवन् भूभर्तुरन्ये सभा-
स्ताराः केरळवर्मणा द्रुतमियं प्रोता प्रभोरिङ्गितात् ॥ ६६ ॥

श्रीमद्भारतनायिकार्पितयथार्हाभ्यर्हणं मातुलं
चाटूक्त्या परितोष्य निर्भरमनुज्ञातामुना सादरम् ।
लक्ष्मीराज्ञ्यथ सानुजा पुरवरान्निर्गत्य पत्या सह
प्रीत्या वन्दितवेङ्कटाचलपतिः प्रत्यागमत् सत्वरम् ॥ ६७ ॥

श्रीवञ्चीशो विशाखस्तदनु सह निजैर्बन्धुभिर्मद्रपुर्या
निर्यातो भूरिपुण्यप्रथिततरमहाक्षेत्रवीक्षाकृतार्थः ।
तत्तद्देशेषु विस्तारितविशदयशोराशिराशु स्वदेशं
प्रत्यागत्य प्रणम्रः प्रतिदिनमभजद् भक्तिमानब्जनाभम् ॥ ६८ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
श्रीमद्भारतनायिकाप्तबिरुदः प्रख्यापयन् नायकं
यातस्तस्य कृतौ विशाखविजये सर्गोऽयमष्टादशः ॥ ६९ ॥

इति श्रीविशाखविजयेऽष्टादशः सर्गः.

---

एकोनविंशः सर्गः ।

श्रियमीयुषः श्रितजने दयाजुषः
शमिताशुभस्य विलसत्सुदर्शनः ।
पुरुषोत्तमो धरणिजानिरात्मनः
कुलदैवतस्य तुलनामुपेयिवान् ॥ १ ॥

---

१ उपहृताम्. २ विलसत् सुदर्शनं शोभनं दर्शनं चक्रायुधं च यस्य सः.

करुणाकरस्य चरणाम्बुजं हरेः
करणैस्त्रिभिः शरणमस्य जग्मुषः ।
धरणीतुषारकिरणस्य सद्गुणा
महिमानमापुरसमानमन्वहं ॥ २ ॥

अरविन्दनाभवरवैभवेन वा-
ङ्मनसाविभाव्यमभवद्यथायथा ।
गुणवृन्दमस्य नितरामकैतव-
प्रणयाजनिष्ट जनता तथातथा ॥ ३ ॥

नगरीमुपेतवति चक्रवर्तिनी-
प्रतिपादितेन बहुमानलक्ष्मणा ।
पृथिवीपतौ प्रमदभारमात्मनः
प्रकटीचकार बहुधा जनाकरः ॥ ४ ॥

अकळङ्कभक्तिकलितां निजप्रजा-
हृदयङ्गमादरपुरस्सरार्हणाम् ।
उररीचकार धरणीपुरन्दर-
श्चरितार्थभावभरितेन चेतसा ॥ ५ ॥

उपदापदार्थपटलानि पेशला-
न्युपहृत्य रंजनितरञ्जना जनाः ।
उपचीयमानबहुमानमानम-
न्नमनाक प्रसन्नमवनीवनावनम् ॥ ६ ॥

कलयन्नपास्तकलुषानशीतका-
ननुपप्लुतान् प्रतिभयामयादिभिः ।
सुहितान् स्वधर्मनिरताननारतं
नृपतिर्जनान् भृशमधत्त सम्मदम् ॥ ७ ॥

१ आनतवन्तः. २ दक्षान्. ३ नृपान्.

क्षितिजानिना जनपदस्य भावुकं
बहुधा विधातुमभिलष्यतामुना ।
अपि पारदेशिकजना वितेनिरे
सविशेषकौशलजुषोऽधिकारिणः ॥ ८ ॥

निहितं सदाशिवपदेऽहितारज-
क्षितिपेन केश्चन जघन्यजं नृपः ।
अपनीय नीतिचणरामचन्द्रभू-
सुरसूरिवरमकरोत् तदास्पदे ॥ ९ ॥

अगदक्षलीक्षितिपतोऽक्षदर्शक-
प्रकरावतंसमणिरेष भूपतेः ।
विदधे वदावदतयावदानता
नयसम्पदा च हृदयं सविस्मयम् ॥ १० ॥

सचिवेषु सत्यनिरतेषु निस्पृह-
प्रतिभेषु नित्यनिजकृत्यकारिषु ।
नृपतिः समर्पितधुरोऽपि तद्विधी-
नवधानवानसमशोभयत् स्वयम् ॥ ११ ॥

चतुरैस्तुरङ्गमवरैरिवोत्तम-
क्रमशिक्षितैः क्षितिपतिः परीजितैः ।
सचिवैर्नियन्तृपदभाग्भिरामर-
स्विजनीवृतं रथमिवाङ्गपुष्कलम् ॥ १२ ॥

अपि वीतविश्रममनेन जाग्रता
निजराज्यकार्यशतभारवाहिना ।

---

१ Chellappa Pillai. २ अक्षदर्शकेति प्राड्विवाके. ३ वाग्मितया. ४ उत्तमेषु कर्मसु आचारपरिपाटीषु आत्मकल्पितदिशासु च शिक्षितैः. ५ भारयन्ति स्म. ६ अङ्ग. स्वाम्यमात्यादीनि; चक्रादीनि च पुष्कलम्.

स्वमतानुगा न जहिरे विपश्चिता
विधयः कदाचिदपि साम्प्रदायिकाः ॥ १३ ॥
तिथिवारयोगकरणादिचोदित-
व्रतदानपूजनजपादिकर्मभिः ।
अनपायि पुण्यमचिनोदनुष्ठितै-
रफलाभिलाषमचलावलाहितः ॥ १४ ॥
उषसि प्रबुध्य विहिताप्लवोऽन्वहं
विधिवद्विधाय विबुधादितर्पणम् ।
भसितत्रिपुण्ड्रलसितः सिताम्बरो
नृवरः सरोजनयनालयं ययौ ॥ १५ ॥
ललितैरतीव कळवेणुकाकळी-
मिळितैरुदीर्णमुरळीमृदुस्वरैः ।
विनिवेदितागमनमेनमानता
जनता नितान्तमुदितोपतस्थुषी ॥ १६ ॥
विशति क्षितीशितरि मन्दिरं हरे-
रविशालमत्र मिळिताः परश्शताः ।
धरणीसुराः सरसमभ्यवाहर-
न्ननवद्यमोदनमनल्पमोदनम् ॥ १७ ॥
अपठत् सुधीः क्वचन तत्र भारतं
क्वचिदादिकाव्यमपि कोविदोऽपरः ।
इतरश्च भागवतमेकतः कृती
स च कोऽपि वैष्णवपुराणमन्यतः ॥ १८ ॥
नृपतिर्विवेश घृतदीपमण्डली-
परिदीपितं सुरभिधूपधूपितम् ।

---

१ दानदेवाराधनादिकर्माणि. २ दर्शनार्थमुपगतेत्यर्थः. ३ शतात् परे. ४ अधिकसन्तोषणम्. ५ तत्र पद्मनाभालये.

विकसत्प्रसूनपटलप्रसाधितं
　　पवनाशनेन्द्रशयनालयोदरम् ॥ १९ ॥

मुखमण्डपैकविपुलोपलोपरि
　　प्रथमानभक्तिरथ मानवाधिपः ।
अधिरुह्य कोरकितपाणिपङ्कजः
　　कमलापतिस्तुतिमिति प्रचक्रमे ॥ २० ॥

"जय पद्मनाभ जय भार्गवीपते
　　जय पङ्कजाक्ष जय भक्तवत्सल ।
जय दैत्यसूदन दयापयोनिधे
　　जय देवदेव जगदेकनायक ॥ २१ ॥

विजयस्व नाभिसरसीरुहोदर-
　　भ्रमरायमाणचतुराननस्तुत ।
मधुकैटभान्तक विभो रमाक्षमा-
　　परिलाल्यमानपदपङ्कजद्वय ॥ २२ ॥

अरविन्दभासुरकराय ते नमः
　　शिवलिङ्गपूजनपराय ते नमः ।
भुजगेशभोगशयनाय ते नमः
　　सनकादियोगिविनताय ते नमः ॥ २३ ॥

जगदण्डमण्डलविधानरक्षण-
　　क्षपणप्रवीणगुणभावितात्मने ।
पुरुषोत्तमाय कलितत्रिमूर्तये
　　भवते नमोऽस्तु महनीयशक्तये ॥ २४ ॥

विरजस्तमास्त्वमसि निष्कळः स्वयं
　　प्रकटैकसत्त्वमयतामुपेयिवान् ।

१ मुखमण्डपे य एको विपुलो विस्तीर्ण उपलश्चतुरश्रशिला तस्योपरि. २ गुण-शब्दस्सत्वरजस्तमोवाची. ३ ब्रह्मविष्णुरुद्रशरीराय.

[1]सकलस्त्वमाकलयसि स्वमायया
[2]भवभावनाय भगवन्क्रियया ॥ २५ ॥

भुवनानि भावयति राजसो भवा-
नथ सात्त्विकोऽवति हिनस्ति तामसः ।
प्रतिसंहृताखिलगुणास्तिरोदधा-
त्यगुणो नयत्यनुगृहीततां ततः ॥ २६ ॥

प्रकृतेः परस्य तव [3]भावविक्रिया-
रहितस्य सान्द्रपरचिन्मयात्मनः ।
अवयन्तु तत्त्वमविपश्चितः कथं
भगवन्नमासिक समस्तसाक्षिणः ॥ २७ ॥

मनुजैर्विचित्ररुचिवासनावशात्
प्रविभिन्नदर्शनमतानुसारिभिः ।
[4]वरिवस्यितो विविधदैवतात्मना
फलदस्त्वमेव [5]सकलाशयेशयः ॥ २८ ॥

अगणेयधर्मफलदा नदी यदा
दुरितार्दि[6]दैवतसरस्थमेव ते ।
अपि कामदे[7]यमकृतोऽप्यनात्मकः
किमु चित्रमत्र पुरुषार्थदोऽसि यत् ॥ २९ ॥

समतादिमदुस्तरङ्गदुस्तरं
भ्रमतामपारभवसागरं हरे ।
प्रणतिर्भवच्चरणयोः शरीरिणा-
मवलम्बनाय तरसा [9]तरीयते ॥ ३० ॥

---

१ सत्त्वेतरगुणस्पृष्टत्वम्. २ सृष्टिप्रवर्तनाय. ३ जन्मसत्तावि‍परिणाम-वृद्ध्यपक्षयनाशात्मकभावविकारषट्कास्पृष्टस्य कूटस्थस्येत्यर्थः. ४ परिचरितः. ५ 'शयवासवासिष्वकालात्' इति सप्तम्या अलुक्. ६ गङ्गा. ७ श्रीः. ८ मुक्तिरूपः. ९ तरिस्तरीरिवाचरति.

भगवन्ननन्यशरणे भवत्पद
प्रवणे प्रसीद करुणानिधे मयि ।
अपराधिनोऽपि महता विधेहि मे
भवदंघ्रिनळिनस्य भावुकम् ॥ ३१ ॥
किमहो भवद्गुणगणानयं जनो
निपुणः प्रबोधकरणः पणायितुम् ।
तदिमान्मदन्तरभक्तिचोदिता-
न्युदितानुकम्पमुदितानि मृष्य मे" ॥ ३२ ॥
अभिवन्द्य दाशरथिमाञ्जनेयम-
प्यथ पार्थिवो नृहरिपार्थसारथी ।
गृहमागतः कृतपदावनेजनः
शुचि भोजनस्थलमलञ्चकार सः ॥ ३३ ॥
विललास तत्र कळधौतभाजन-
प्रकरो विशालकदळीदळोदरे ।
अरविन्दभर्तुरिव मण्डलोत्करः
स्फुरदिन्द्रनीलसुषमे नभस्तले ॥ ३४ ॥
तमभि क्षमावलभिदंशुमत्फला-
विमलच्छदे धवळवाससास्तृते ।
उपविश्य सूदपरिवेषितं हितं
सुमनान्नमभ्यवजहार कोमळम् ॥ ३५ ॥
अहह स्पृशत्यपि न वृत्रहानने-
रमृतोपमानपि न इत्यसंशयम् ।
दधतस्सबाष्पविसराः संतापतां
विलुलोकिरे विविधतेमनोत्कराः ॥ ३६ ॥

१ स्तोतुम्. २ स्तुतिवचनानि. ३ कदलीशुभ्रपत्रे. ४ गोधूमान्नम् 'गोधूम-सुमनौ समौ' इत्यमरः. ५ बाष्पशब्द ऊष्माणि अश्रुणि च. 'बाष्प ऊष्माश्रु' इत्यमरः. ६ सोष्णतां सदुःखतां च

विरराज सा रसवती[1] महीपति[2]-
प्रियमोदनं जनयति 'स्म यानिशम् ।
असमानसद्गुण[3]समेतया तया
सुमनस्थिति[4]र्न विजहे कदाचन ॥ ३७ ॥
कृतसङ्कथं सरसमिष्टसेवकै-
र्मितमश्नाति क्षितिशतक्रतौ शनैः ।
नितरामगायिषत हर्षदा हरि-
स्तुतयो मृदङ्गरवमञ्जु गायनैः ॥ ३८ ॥
विहिताशनोऽथ महिताशयो मही-
वलशासनः स्वनिलयं समागतः ।
अवधानवान् विविधमात्मनो व्यधात्
करणीयमेष शरणायितः सताम् ॥ ३९ ॥
क्षितिरक्षिणं कलितविश्रमं क्षणं
विहितापराह्णिकहितात्पभक्षणम् ।
उपतस्थिरेऽथ सुहृदश्च मन्त्रिणः
प्रियसेवकाश्च बहुशो विपश्चितः ॥ ४० ॥
कृतसाहितीपरिचयः कियच्चिरं
कृतिनामसावचरमः कुतूहलात् ।
दशमीभवत्यथ दिने रथस्थितो
निरगाद् गृहादुचितवेषपेशलः ॥ ४१ ॥
अपसव्यपाणिधृतखड्गतल्लजै-
रपरप्रकल्पिततुरङ्गयन्त्रणैः ।
चपलं[5] चलन्ननुगतोऽथ सादिभि-
र्नृपतिः पुरोपवनमभ्युपेयिवान् ॥ ४२ ॥

---

१ पाकशाला, अथ च रागवती कापि नायिका. २ महीपतेः प्रियमभिमतं ओदनं गोधूमान्नं, अथ च महीपतेः प्रियेण इष्टकृत्येन मोदनं सन्तोषणम्. ३ गुणशब्दः सूदे सौशील्यादौ च. ४ गोधूमस्थितिः अथ च सज्जनमर्यादा; अस्मिन् पक्षे 'खर्परे शरि वा विसर्गलोपः' इति लोपो बोध्यः. ५ सत्वरम्.

समयं कियन्तमयमत्र यापयन्
वलमानमन्दपवमानशालिनि ।
घृततालचारप्रकृतवाद्यघोषण-
प्रसितैः सहामिळत दूगपुङ्गवैः ॥ ४३ ॥

परितोष्य तान् महदयाग्रतस्सरः
सरसैर्मितैश्च वचनैर्वदावदः ।
वनरक्षकोपहृतमञ्जुमञ्जरि-
स्त्वरितं नृपोऽथ निजगेहमागमत् ॥ ४४ ॥

दिवसेऽवमेदुषि वसुन्धराधिपः
प्रयतः कृतोपहृतदीपवन्दनः ।
विरचय्य सान्ध्यविधिमेधितादरं
निरवर्तयत् तदनु तान्त्रिकान् जपान् ॥ ४५ ॥

चतुरङ्गकेलिमकरोत् कदाप्यसौ
प्रियसेवकेन सह रामवर्णा ।
अविगीतमेव हि महीक्षितामिह
व्यसनं कदाचन विनोदकारणम् ॥ ४६ ॥

भृतकेन तेन कृतकेतरादरं
परिवादिनीं क्वणयता श्रुतेः कृते ।
क्षणदामुखे क्वचन दक्षिणः क्षणं
सुरवामवादयत किन्नरीमयम् ॥ ४७ ॥

कृतभोजनोऽथ जननाथशेखर-
श्चिरमप्रमीळमुपयुज्य लेखनीम् ।
निरवर्तयन्निरवशेषमेष त-
द्दिनकृत्यशेषमचिरक्रियः स्वयम् ॥ ४८ ॥

---

१ अवसन्नवति. २ 'विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः. ३ Violin.

नगरोरकण्ठगतमेत्य भूभृता
श्रितिकण्ठमन्दिरमकुण्ठभक्तिना ।
समसेवि शैवदिवसेषु शङ्कर-
श्चरणप्रणम्रजनताशिवङ्करः ॥ ४९ ॥

अतिशस्तधर्मरतिरभ्यवन्दत
क्षितिशक्र एष नगराजनन्दनाम् ।
मतिशुद्धिमान् प्रहितटाभिधं गतः
प्रतिशुक्रवारमदसीयमालयम् ॥ ५० ॥

अतिमाननीयचरितः शुभार्जने
मतिमाननीपदयमुत्कतां भजन् ।
नतिमातनोत् सुरवरूथिनीपतेः
प्रतिमासमौशनसवासरेऽन्तिमे ॥ ५१ ॥

अयमेत्य तीर्थगिरिशेखरायितं
स्वनिकेतमेतदुपकण्ठभूमिषु ।
स्वयमेव बीजनिवहं महीरुहा-
मवपद्विचित्रफलपुष्पशालिनाम् ॥ ५२ ॥

प्रथितो विशाखपृथिवीशनकृतो-
रतुलो गुणः शयकुशेयस्य सः ।
यदुपेयिवत् किमपि वन्ध्यतां मग-
वपि बीजमुप्तममुना कदापि नो ॥ ५३ ॥

रमवन्ति भूरितरतेमनान्यसा-
वसमानपाकपटिमा कदाचन ।
निरपादयत् स्वयमुदीतकौतुकः
प्रजिवाय च प्रियजनाय सादरम् ॥ ५४ ॥

१ श्रीकण्ठेश्वराख्यम्. २ कू (प) करमठन. ३ उळ्ळूराख्यदेवालयगतस्य स्कन्दस्य.
४ शुक्रवारे. ५ पाणिपद्मस्य.

परिशीलितानुपममृदङ्गविद्यया
नवभोज्यवर्गमनवद्यमाद्यया ।
अर्पितं कदापि भगिनीतनूजया
नृपतिः समश्य भृशमध्यगान्मुदम् ॥ ५५ ॥

विविधौषधानि विधिनोपसाधिता-
न्यधिवैद्यशास्त्रमचिनोद् विशारदः ।
अददादकिञ्चनजनाय किञ्च ता-
न्यनुकम्पया नृपतिरामयाविने ॥ ५६ ॥

सदनं कदाप्ययमुदन्वदन्तिके
प्रियमात्मनः प्रसुमग्रभञ्जनम् ।
कृतकाल्यकृत्यनतिगत्य तत्र तत्
कुतुकाप्तिनाय कुलशेखरो दिनम् ॥ ५७ ॥

दिवसं नरा जित गृहे मनोहरे
निवसन्नयं नृपतिरेकदा मुदा ।
प्रथमानवत्सलतया स्वसुः सुतां
प्रथमां न्यमन्त्रयत भोजये सतीम् ॥ ५८ ॥

अथ तीरमेत्य सरसं सरस्वतः
सहिता प्रियेण सहसा महीश्वरी ।
उपचारपूर्वमुपसेव्य मातुलं
परदेवतां सविधगामवन्दत ॥ ५९ ॥

रमणीमणिः सपदि रामवर्मणः
कुलशेखरस्य कृतमान्यकर्मणः ।
अनुरुन्धती सततमतन्द्रिता ततः
प्रततान गानमसमानमाञ्जिम ॥ ६० ॥

---

१ लक्ष्मीदेव्या. २ प्राप्तवान ३ गृहमेजनात.

उपवीणयन् प्रणयिनीं विपञ्चिका-
कळकाकळारवामळद्गळस्वना ।
अभिनन्दितोऽभवदतीव केरळः
क्षितिपालमौलिमणिना सुहृन्मणिः ॥ ६१ ॥

अवनीवलारिभगिनीतनूभुवः
कळकण्ठकोमळगळध्वनेः पुरः ।
यदलज्जमेव रवमुज्जगार तत्
परिवादिनी ध्रुवमवैमि वल्लकी ॥ ६२ ॥

अवतीर्णवत्यधिवसुन्धरं गिरा-
मधिदेवतेयमिति शङ्क्यमानया ।
अनया ततः प्रकटिता प्रवीणता
धृतवीणया क्षितिभृतोऽभवन्मुदे ॥ ६३ ॥

समुदीयमानहिमदीधितिद्युति-
प्रतिबिम्बनैधितसितिम्नि कुट्टिमे ।
उपविश्य सम्धिसुखमन्वभावि तै-
रथ सम्मदेन कृतनर्मभिस्त्रिभिः ॥ ६४ ॥

अथ क्षितिशतक्रतोरनुमतिं गृहीत्वा सह
प्रियेण कमला भुवो विमलकौमुदीमेदुरे ।
समूढहिमवालुकाधवळवालुकामण्डले
स्थले कलितखेलना स्वगृहमागता वेगतः ॥ ६५ ॥

नीत्वा तत्र निशीथिनीमथ विशां नाथो विशाखः प्रगे
शीतोत्सारिशिरस्त्रकञ्चुकधरो यष्ट्युद्धराजत्करः ।
पालाशद्युतिपादुकाञ्चितपदः पद्भ्यां चरिष्णुः किय-
द्दूरं सारथिसज्जितं रथमधिष्ठायाञ्जसायाद् गृहान् ॥ ६६ ॥

---

१ वीणयोपगायन्. २ परिवादोऽपवादोऽस्या अस्तीति तथा. ३ समुदीयमानेति समुत्पूर्वादीङ् गताविति दैवादिकाद्धातोर्लटश्शानचि रूपम्. ४ यष्टिश्रेष्ठशोभमानपाणिः.

¹मामाजिकास्पदमदीयत मद्भर्त्रा
विख्याततन्नगरसर्वकलानिकेते ।
यत् केरळाय कृतिने नृपतिः प्रभूतां
प्रीतिं ततोऽभजत पण्डितपक्षपाती ॥ १७ ॥

श्रीमानासाद्य सीमातिगसुषमपरिष्कारविभ्राजमानं
सानन्दं प्रेयसीमन्दिरमथ तिसृणां नन्दनानां विवाहम् ।
भूयिष्ठाडम्बरं भूतलवलमथनः कारयित्वा कृतार्थः
प्राप श्रीपद्मनाभं शरणमविरतं तत्पदाब्जार्पितात्मा ॥ १८ ॥

जातः केरळमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरळवर्मराज इति यः श्रीवञ्चिराज्ञीपतिः ।
सर्गस्तस्य कृतावनीव सरसः क्ष्मापालदैनन्दिन-
व्यापारप्रकरान्वयं विशदयन्नेकोनविंशो गतः ॥ १९ ॥

इति श्रीविशाखविजय एकोनविंशः सर्गः.

विंशः सर्गः ।

श्रियमुपयतवन्तं ²दैवतं ³सेवमानः
प्रियदुहितृवरेषु प्रीतिमान् सोऽतिमात्रम् ।
नियतमवहितात्मा रामवर्मक्षितीशः
प्रयतमतिरतानीदात्मकृत्यान्यतन्द्रः ॥ १ ॥

विविधनवपरिष्कारोत्कधीः श्रीविशाखो
⁴जनपदजनसङ्ख्यानाय सङ्ख्यावदग्र्यः ।
⁵उपसचिवमुदारप्रज्ञमाज्ञाप्य नागं
गळदवधि तदर्थे वस्त्वदस्सादकार्षीत् ॥ २ ॥

१ F. M. U. इति बिरुदम्. २ परिणीतवन्तम्. ३ 'दैवतानि पुंसि वा' इत्यमरात् पुंस्त्वम्. ४ Census. ५ Dewan Peshkar Nagamaiya. ६ नागायाधीनं कृतवान्.

कृषिविरचनशिल्पारम्भणादिप्रशस्त-
　　व्यवसितिषु जनानां कर्तुमुत्साहमुच्चैः ।
निजविषयविभागेभ्योऽयमानाय्य नाना-
　　विधरुचिरपदार्थान् संसदि प्राददर्शत् ॥ ३ ॥

फलकुसुमसमूहं व्रीहिशाकोत्करं धे-
　　न्वनडुहनिवहं चात्युत्तमं दर्शयंश्च ।
द्रविणमथ यथार्हं स्तोत्रपत्रं च धात्री-
　　पतिमतमनुसृत्य प्रत्यपाद्यत्र धुर्यैः ॥ ४ ॥

प्रतिनवरचितेषु प्राज्यशिल्पप्रभेदे-
　　ष्वधिसभमतिचित्रेष्वत्र सन्दर्शितेषु ।
व्यरुचदवनिजानेराज्ञया भागिनेय्या
　　समुतममितशोभं तान्तवं चित्रकर्म ॥ ५ ॥

करकलितगदाकेनात्र भीमेन राज्ञो
　　नवभटनिवहेनाजातशत्रोर्निदेशात् ।
कुरव इव विनाशं द्रागनीयन्त विश्वे-
　　ऽप्यधिजनपदमेकागारिकाः क्रूरकृत्याः ॥ ६ ॥

निरतिशयनयाब्धिर्नीवृति श्रीवृतेऽस्मि-
　　न्नवनिपतिवरेण श्लक्ष्णया दण्डनीत्या ।
अनयमनयदस्तं शान्तधीरस्तशङ्का-
　　लवमयमनुरुन्धन् मन्त्रिणो मन्त्रणानि ॥ ७ ॥

जनसमुदयदेयं भागधेयं स्वकीयं
　　विविधमिह विधित्सुर्विपद्वर्गैकध्यमेव ।
जनपदगतनानाकाननक्षेत्रवाटी-
　　परिमितिमवनीनाथोऽदिताधातुमाज्ञाम् ॥ ८ ॥

१ Exhibition इति प्रसिद्धं नानाविधवस्तुप्रदर्शनकर्म 'कृतवानित्यर्थः. २ 'द्युद्भ्यो लुङि' इति परस्मैपदम्. ३ सम्यक् स्तुतम्. ४ भीषणेन, अथ च वृकोदरेण. ५ Police-Constables. ६ अनुत्पन्नरिपोः, अथच युधिष्ठिरस्य. ७ चौराः. ८ एकधैव ऐकध्यम्. ९ Survey and Settlement.

गणनचणपरिच्छिन्नावधीनां स्थलीना-
मनिशमविशङ्केन ज्ञापनार्थं निखातैः ।
प्रतिपदमुपलानां सञ्चयैर्वञ्चिभूमे-
रजनि यत समन्ताद् दन्तुराण्यन्तराणि ॥ ९ ॥

वणिगभिमतिहृणश्रेणियत्नप्रणीते
व्यतनुत विनिमयो यत्र वित्तं प्रभूतं ।
उपनगरगतं तं तन्तुसन्तानयन्त्रा-
लयमयमनुजग्राहैकदाम्यागमेन ॥ १० ॥

नरपरिवृढनीत्या मण्डलेऽभूतपूर्वं
समुपचयमवापोपोपादिमः पूरुषार्थः ।
प्रशममपि तथोच्चैर्वञ्चिराट् संचिचीष-
न्नकृत मतिमतन्द्रः सेवितुं रामसेतुम् ॥ ११ ॥

अकृत सुकृतसिन्धुर्यत् परं रामराजः
स्वकुलतिलकभूतो वत्सरेभ्यः शतात् प्राक् ।
तदयमुदयदास्थः पुण्यमन्यूनमाशु
व्यवसितमतिरासीच्छ्रीविशाखो विधातुम् ॥ १२ ॥

विहितबहुदवीयोदेशसञ्चार एष
क्षितिवलभिदभीक्ष्णं लब्धपक्कानुभूतिः ।
श्रमरहितमतानीत् सेतुयात्रोपयुक्तं
सकलमपि विधानं सारवित् सावधानम् ॥ १३ ॥

निजमभिजनमुच्चैः श्रेयसा योक्तुकामः
सुजनतिलक एतच्छेखरः श्रीविशाखः ।
भुजगशयनमावन्द्यानवद्येऽह्नि युक्त-
प्रजविहयरथस्थः सेतवेऽथ प्रतस्थे ॥ १४ ॥

---

१ कोलम्बपुरगतम्. २ अर्गलाः. ३ धर्मस्वम्. ४ कुलम्.

जनपदमतिलङ्घ्य स्वीयमन्वीयमानो
मनुजपतिरथामात्याक्तिभिः सावरोधः ।
सकुतुकबहुलोकव्याकुलं शालिवाटी-
नगरमयमनीषत्तोषमीषांबभूव ॥ १५ ॥

सुगुणसदनकृष्णस्वामिसूरिप्रधानै-
र्बहुमतिमतिमात्रं लम्भितः कुम्भिनीन्द्रः ।
अनलशकटपङ्क्तौ स्वीकृतायां कुटीरं
रुचिरतरमथ प्रातिष्ठतोधिष्ठितोऽतः ॥ १६ ॥

अधिपथमथ विश्रम्यान्तरा तत्रतत्र
प्रथितविविधविद्वत्सङ्घसंभाव्यमानः ।
सरणिमधिकदीर्घामत्यलङ्घिष्ट शीघ्रं
धरणिपतिवतंसो वाह्ययानेन गम्याम् ॥ १७ ॥

व्यथितपथिकलोकं वालुकाभिर्ललाट-
तपतपनमयूखोत्तापिताभिर्नितान्तम् ।
अयनमयमतीयायायतं कण्टकौघै-
श्चितमथ शिबिकायां सञ्चरन् वञ्चिराजः ॥ १८ ॥

पुरुषपरिवृढानां सेतुपत्यादिमाना-
मुरुकुतुकमुरीकृत्योपचारानुदारान् ।
सपदि निरयपारावारमेतुं प्रपेदे
नृपतिकुलवतंसः सेतुमानृण्यहेतुम् ॥ १९ ॥

अपि कपिभिरकूपारस्य गम्भीरिमाणं
परिगणितवतः श्रीराघवस्यापदानम् ।
अनुपममनुचिन्त्यात्यन्तचित्रीयमाणो
मनुजपतिरपश्यत् सादरं सेतुरेखाम् ॥ २० ॥

---

१ प्राप. २ कर्तरि क्तः. ३ 'असूर्यललाटयोर्दृशितपोः' इति खश. ४ रामनाथपुरेश्वरादीनाम् ५ सन्तानोत्पत्तिहेतुतया पितृऋणनिवर्तकमित्यर्थः. ६ वृत्तं कर्म.

विधिवदभिषुतेन श्रीधनुष्कोटिमुख्ये-
ष्वधिकमुदयदर्क्षस्थेनाथ तीर्थव्रजेषु ।
अनन्नघि वसु गोत्रागोत्रभेत्रा द्विजत्रा-
क्रियत मणिहिरण्यक्षेत्रगोत्रादिदात्रा ॥ २१ ॥

सकलभुवनकल्याणाय भर्त्रा रघूणा-
मिह परशिवमूर्तेः संप्रतिष्ठापितायाः ।
नरपतिरभिषेकं तुङ्गगाङ्गेयकुम्भै-
र्व्यरचयदथ गाङ्गेनाम्भसा संभृतेन ॥ २२ ॥

नृपतिरकृत सेतुस्नानमात्रं पुरैकः
पुनरभिषवमन्यः केवलं जह्नुजायाम् ।
उभयमपि विधाय स्फीतभाग्यो विशाख-
क्षितिरमगमणिस्तावत्यशेत स्ववंश्यौ ॥ २३ ॥

क्षितिवलमथनोऽथ प्रस्थितो रामनाथा-
दविपथममराणामालयेष्वाहितार्चः ।
विरचितवरिवस्यो विन्दुभिस्तत्रतत्र
स्वनगरवरमागादादरोन्निद्रपौरम् ॥ २४ ॥

वरमरकतनासालंकृती कङ्कणानि
स्फुरदरुणमणीनि श्रेष्ठतीर्थाम्बुकुम्भौ ।
सुमतिरमितहार्दः सोदरीनन्दनाभ्या-
मदित मुदितचेता मेदिनीवृत्रजेता ॥ २५ ॥

तदनु मनुजनाथः पद्मनाभस्य सद्यः
सदनमुपगतोऽमुं भूरिभक्त्याभिवन्द्य ।
नवनवमुपहारद्रव्यमव्याजरम्यं
मणिकनकदुकूलप्रायमस्याडुढौकत् ॥ २६ ॥

१ महीन्द्रेण. २ द्विजाधीनं कृतम्. 'देये त्रा च' इति त्राप्रत्ययः. ३ आश्लेषर्क्ष-
जरामराजः. ४ पण्डितैः. ५ लक्ष्मीपार्वतीदेवीभ्याम्. ६ ढौकयति स्म.

हरिचरणसपर्यातत्परः स्वप्रजाना-
मनिशमवहितात्मा क्षेमकृद् रामवर्मा ।
सुमतिभिरनुकार्यां साधितासंख्यकार्या-
मतनुत दिनचर्यामस्ततन्द्रः क्षितीन्द्रः ॥ २७ ॥

गिरिमयमथ देशं कंचनोदक्प्रतीच्यां
दिशि जलनिधितीरे नातिदूरे नगर्याः ।
हरिसदनसनाथं भूसुरग्रामरम्यं
गतचरमपि भूयः कौतुकादाप भूपः ॥ २८ ॥

सरिदधिपतिवीचीसंघसंपर्कशङ्क-
प्रसृमरपवमाने वैजयन्तोपमाने ।
अतिसरसमनैर्षीदत्र सौधे गनोषी
कतिचन दिवसानि श्रीनिवासोपसेवी ॥ २९ ॥

उषसि चरणचारी भूरिशो गैरिकाणि
क्षितिधरशिखरेभ्यस्तत्र कृत्स्नाश्च मृत्स्नाः ।
सकुतुकमपि कम्बनम्बुराशिप्रतीरा-
दयमचिनुत शम्बूकौघमुच्चावचं च ॥ ३० ॥

गळदमलजलस्य ग्रावराशेरधस्ता-
दधिजलनिधिरोधः ख्यातनिष्पादितायां ।
रचितरुचिरदारुश्रेणिनिश्रेणिकाया-
मथ नृपतिरनार्दीदाप्लवं वापिकायाम् ॥ ३१ ॥

निजनिलयसनीडारोहणौघेन सेवा-
समुपगतजनानामर्दनात् सार्थनामा ।
दृढतरलघुदेहेनाथ सोऽवन्दि देवः
श्रमरहितमनेनोल्लङ्घ्य सोपानपाळिम् ॥ ३२ ॥

---

१ वल्कलान्तम्. २ प्रशस्ता मृदः. ३ जलशुक्तिसमूहम्. ४ नैकभेदम्. ५ 'आरोहणं स्यात् सोपानम्' इत्यमरः.

तदनु विहितभुक्तिस्तत्र रम्ये स हर्म्ये
व्यहरत कृतनानाकाव्यशास्त्रादिचर्चः ।
निकटनिहितदूरालोकयन्त्रेण[1] पोत-
प्रकरमुदधिमध्ये यान्तमालोकमानः ॥ ३३ ॥

अभिरजनि सरस्वानीक्षितो भूक्षितोऽलं
हृदयमकुरुताभ्युत्पातुकं[2] कौतुकेन ।
विसृमरहिमरश्मिज्योतिरुद्द्योतितोच्चै-
स्तरतरलतरङ्गस्फारगम्भीरघोषः ॥ ३४ ॥

इति कतिचिदहानि स्वैरमध्युष्य देशं
क्षितिपतिरमुमर्थैस्तर्पयन् विप्रवर्यान् ।
सपदि सपरिवारः प्राप्य भूयः स्वकीयं
निलयमलमकार्षीदर्थिताभ्याधिताङ्कः ॥ ३५ ॥

अथ महिततमाया भारतस्वाधिपाया
निरुपमगुणपारावारमन्त्यं[3] कुमारम् ।
अवनिपतिरवेत्य प्राप्तदिष्टान्तमन्त-
र्निरतिशयमशेषैः शोकमानर्च्छ लोकैः ॥ ३६ ॥

प्रतिकृतरुगनेकैः सज्जदिव्यौषधैर-
प्यतिपरिचितशास्त्रैर्जागरूकैर्भिषग्भिः ।
यदमृत[4] बत राज्ञ्याः प्रेमधामात्मजन्मा
नियतिमनतिलङ्घ्यां तन्नृपो निश्चिकाय ॥ ३७ ॥

किमपि दशमितोत्थेनामयेनाभिभूता
विरचितपरिचर्या पुत्रदौहित्रमुख्यैः ।
परगतिमनिधन्या गाणपत्यां[5] चतुर्थ्या-
मभजत जनयित्री भूमिभृद्वल्लभायाः ॥ ३८ ॥

---

१ Telescope. २ अभ्युत्पतनशीलम्. ३ H. R. H. Albert, Duke of Albany. ४ मृतोऽभूत्. ५ गणपतेर्विनायकस्येयं गाणपती. तस्याम्.

प्रचुरमथ वितीर्य प्रेतकार्यार्थमस्याः
प्रणतजनहितैषी भूपतिः स्वापतेयम् ।
सपदि सदुपदेशैः सान्त्वयामास धीमान्
भृशमुदितविषादानात्मदारात्मजादीन् ॥ ३९ ॥

कतिपुचन ततोऽतीतेषु मासेषु यूनो
निरुपधिनिजवात्सल्यैकपात्रीकृतस्य ।
प्रथमदुहितृभर्तुः कालधर्मप्रपत्त्या
प्रतिनवमवनीन्द्रः प्राप सन्तापमन्तः ॥ ४० ॥

अथ पुनरचिरेणैवाभवद् भूवलारे-
रहह चरमजामातापि नामावशेषः ।
वयसि किमपि पौगण्डाभिधेऽतीत एव
प्रबलतरमसूरीव्याधिनः साधुशीलः ॥ ४१ ॥

इह जगति जनानां जीवितं वातनृत्यत्-
कमलदळचलाम्भश्शीकरान्निर्विशेषम् ।
परमहरहरन्तः पश्यतो धर्मनिष्ठा
नरवरकुलमौलेर्मेदुरा प्रादुरासीत् ॥ ४२ ॥

अथ सरसिजनाभप्रीतये श्रीतुलापू-
रुषवितरणमंहस्संहतिध्वंसहेतुम् ।
अतिमुदितजनौघश्लाघितो भूमरुत्वा-
न्नतितनिषदनीपन्मङ्गळैषी मनीषी ॥ ४३ ॥

अतत यदनतीते यौवनेऽवाप्तराज्यः
किमपि कृतविलम्बः पूर्वजो भूपतिर्मे ।
तदिदमलघु कृत्यं मङ्क्षु कार्यं मयेति
व्यवसितमकृतैष द्व्यूनपञ्चाशदब्दः ॥ ४४ ॥

१ धर्मतत्परता. २ ननितुमैच्छन्. ३ ननुनं स्म.

अनुपमितमहिम्नो रामराजात् परस्ता-
दभवदभिजनेऽस्मिन् को महाराट् चिरायुः ।
वयसि मम परेयायाग्रजोऽपीति चिन्ता
त्वरितमतनुतैनत् कर्म निर्मित्सुमेनम् ॥ ४५ ॥

अथ वितरणमेतत् पूर्वभूपैः कृताद-
प्यधिकतरपरिष्काराभिरामं चिकीर्षन् ।
सकलमपि तदर्थं संविधातुं समर्थं
सचिवमुचितलग्ध्येनादिशन्मेदिनीशः ॥ ४६ ॥

शिरसि निदधदाज्ञां स्वामिचित्तानुवृत्ता-
वनिशमवहितात्मा तामथामात्यवर्यः ।
निरचिनुत तुलाभारोत्सवायोपयोक्तुं
निरवधि निजनीत्या सञ्चितं वित्तजातम् ॥ ४७ ॥

अथ वणिगधिपेभ्यो विश्रुतेभ्यः प्रभूत-
द्रविणविनिमयेन क्रीतमत्यन्तशुद्धम् ।
समभृत सचिवोऽलं भूष्णु विश्वंभराभृत्-
परिबृढतुलनायै हेम निस्सीमभूम ॥ ४८ ॥

अवनिभृदधिपो नन्वाश्रयोऽहं बुधाना-
मिति नृपतिलकेन स्पर्धमानस्य मेरोः ।
शिर इव धृतशीर्षच्छेद्यभावस्य सद्य-
श्छिन्नमुपहृतमासीत् पेटकं हाटकस्य ॥ ४९ ॥

अथ कुशलकलादैः कारयामास निष्क-
प्रकरमवनिभर्तुर्भौरिको भूरिकान्तिम् ।

१ तुलापुरुषदानम्. २ चिकीर्षुम्. ३ सम्पादितवान्. ४ पर्याप्तम्. ५ राजश्रेष्ठः पर्वतश्रेष्ठश्च. ६ विदुषां देवानां च. ७ धृतः शीर्षच्छेद्यभावः शीर्षच्छेदार्हत्वं येन तस्य, 'शीर्षच्छेदाद्यद्' इति शीर्षच्छेद्यशब्दः साधुः. ८ खण्डितम्. ९ समूहम्. 'पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके' इति विश्वः. १० स्वर्णकारैः. ११ कनकाध्यक्षः.

दधतमधिकभद्रामेकतः शङ्खमुद्रां
विशदमपरतः श्रीपद्मनाभस्य चाख्याम् ॥ ९० ॥

इतरनरवराणां दुष्करं वञ्चिराजो
वितरणमचिरेणैवानितांत्युदारः ।
इति जनितमुदन्तः सर्वनृणामुदन्तः
प्रतिदिशमतिशैघ्र्येणानशे तद्यशोवत् ॥ ९१ ॥

नृपतिलकतुलाभारोत्सवेनोत्सुकं सत्
सपदि सहकुटुम्बं वाडवानां कदम्बम् ।
अधिनगरि दविष्ठेभ्योऽपि देशान्तरेभ्यः
समुपगतमवात्सीन्निर्वृतं सर्वतोऽपि ॥ ९२ ॥

दिनमनु निजगेहे दीनताजन्यमुच्चैः
कदनमनुभवन्ती काञ्चनाशां भजन्ती ।
धरणिसुरसमज्या धर्मनिघ्नेन राज्ञा
पुरवरमुपयाता पूजितासीदसीमम् ॥ ९३ ॥

नरपतिकुलमौलेराज्ञया बन्धुतायाः
परमकुतुकिताया वेगतोऽत्रागतायाः ।
नगरवमतिराधादाकुलीभावमुच्चै-
रपरिचितचरीभिः सत्क्रियाधोरणीभिः ॥ ९४ ॥

प्रतिनवरचितेन स्फारविस्तारभाजा
भवनसमुदयेन भ्राजितं तत्रतत्र ।
पुरमतिशुचि तावत् तूर्णमापूर्णमासी-
दनवधिजनसङ्घातेन तातस्ततेन ॥ ९५ ॥

इह निजसदनेभ्यो दीनतादूनिताना-
मनशनविवशानामागतानां जनानाम् ।

---

१ आनीनिर्गमिच्छन्ति. २ 'प्रसन्नोत्सुकाभ्यां' इति तृतीया. ३ ब्राह्मणानाम्.
४ आनन्दवर्णनायामाशां स्वर्णेच्छां वा. ५ ततस्ततः आगतेन; 'तत आगत' इत्यण्.

अजनिषत शरीराण्यल्पसङ्कोचैरहोभिः
स्फुटमुपचितमेदोमांसलम्बोदराणि ॥ ९६ ॥

बहुतृणममृतं च प्रेक्ष्य निर्वर्तिताष्टेः
पथिषु गळितशङ्कं क्लृप्तविण्मूत्रसृष्टेः ।
अखिलबहुमतस्य स्वैरिणः स्पष्टमासी-
दवनिसुरसमूहस्येह माहाकुलत्वम् ॥ ९७ ॥

पठितसकलशास्त्राः पण्डिता वाजपेय-
प्रमुखमखविधानैकायना याययूकाः
श्रुतिषु तिसृषु दक्षाः श्रोत्रियाश्चात्र धात्री-
वलमथनतुलाभारादरेणामिळन्त ॥ ९८ ॥

जनममुदयमागच्छन्तमश्रान्तमेतं
जवनपवनधूतोदन्वदुल्लोलतुल्यम् ।
कथमपि पुरमन्तर्वासयामास लोकं
सकलमिव युगान्ते तुन्दमिन्द्रानुजस्य ॥ ९९ ॥

कमलजमिव भूयस्सत्यलोकाधिवासं
मुरहरमिव लक्ष्मीं देहलीनां दधानम् ।
पुरभिदमिव भूत्या भूषितं भोगिजुष्टं
भवनगणमसेवन्तावनीदेवनाथाः ॥ १०० ॥

अरुणकिरणजालैः प्राग्दिगालेपनात् प्रा-
गमलबहुलपाथस्याप्लुताः पद्मतीर्थे ।

---

१ अमृतं च सुधामपि. बहुतृण तृणक.प. 'विभाषा सुप' इत्यादिना बहुच्. प्रेक्ष्य निर्वर्तिताष्टेः कृताशनस्य, राजदीयमानाष्टगुणेनामृतेऽपि सावज्ञस्येत्यर्थः. गोपक्षे बहु बहुलं तृणं, अमृत जलं च प्रेक्ष्य निर्वर्तिताष्टेः. २ महाकुले जातो महाकुल., महाकुलशब्दादञ्, तस्य भावस्तत्त्वम्. अथच माहानां गवां कुल समूहस्तस्य भावस्तत्त्वम्. ३ उल्लोलेति कल्लोले. ४ भूयस्सत्यानां बहुतरऋतानां लोकानां जनानामधिवासम्, अथच बाहुल्येन सत्याह्वये लोकेऽधिवासो यस्य तम्. ५ अङ्गणानाम्, अथच शरीरश्लिष्टामिति लक्ष्मीविशेषणम्. ६ ऐश्वर्येण भस्मना च. ७ भोगिभिर्विषयासक्तैः सर्पैश्च जुष्टम्.

विधिविरचितसन्ध्यावन्दना नित्यमेते
चरणयुगमुपासांचक्रिरे चक्रपाणेः ॥ ६१ ॥

तदनु बुभुजिरेऽमी भुक्तिशालामुपेता
विपुलविमलपालाशाभरम्भादलेषु ।
सुरभिरुचिरधाराळाज्यमाराळिकाळी-
विरचितपरिवेषं सूपसम्पन्नमन्नम् ॥ ६२ ॥

इति समुखमपास्तामर्त्यपुर्यां नगर्यां
वसति वसुमतीदेवोत्करे काञ्चनोत्के ।
मुरमथनमुपास्य श्रद्धया श्रीविशाखः
कृतगुरुवरणोऽभूदात्तसप्ताहदीक्षः ॥ ६३ ॥

अष्टाभिर्दिक्पतीनां प्रतिकृतिभिरतीवाभिरामान्तराळं
स्थूलस्थूणाचतुष्काञ्चितमतृणहृतोदारदारुप्रकाण्डैः ।
अन्तर्वैकुण्ठवेश्म व्यरचयत गदाशङ्खचक्राम्बुजाङ्क-
द्वारं तावत् तुलामण्डपमतुलकलाकौशलः कारुवर्गः ॥ ६४ ॥

धरित्रीसुराग्रेसरैरार्त्विजीनैः
पवित्रीकृते मन्त्रपूताभिरद्भिः ।
प्रथिष्ठां तुलामञ्जसा मण्डपेऽत्र
प्रतिष्ठापयामास राज्ञः पुरोधाः ॥ ६५ ॥

भुक्त्वा सप्त दिनानि क्लृप्तनियमो भूयोऽष्टमे वासरे
भूजानिर्धृतनिष्प्रवाणिवसनो भूषाविशेषाङ्कितः ।
आनम्योपहृताञ्जनाभकलभः श्रीकञ्जनाभं जनै-
रानन्दादनुभूयमानविजयः प्रापत् तुलामण्डपम् ॥ ६६ ॥

१ 'आराळिका आन्धसिकाः सूदा औदनिका गुणाः' इत्यमरः. २ सप्ताहदीक्षा सुवर्णतुलापुरुषदानक्रतुसम्बन्धिनी दिनसप्तकव्यापिनी दीक्षा आत्ता येन सः. ३ ऋत्विक्कर्माहन्ति आर्त्विजीनास्तैः, 'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम्' इति खञ्. ४ परिहितनूत्नवस्त्रः.

जिह्वादिस्थानेषु तुलापूरुषमुख्यैः
संयुक्ताया नैकहिरण्यप्रतिमानैः ।
पीठीमेकां भूपतिरध्यास्त तुलायाः
श्रीमानङ्के न्यस्य कृपाणं फलकं च ॥ ६७ ॥

पीठीमन्यामुन्नमन्तीं तुलायाः
स्फीतानन्दं भूमिभुञ्जित्रवृन्दम् ।
भूम्ना हेम्नामाननतामाततान
स्थाने जानुं नृम्भितं स्वामिभक्त्या ॥ ६८ ॥

राज्ञा सनाथ फलकं तुलाया
न्यक्कृत्य यः प्रागुदतिष्ठदन्यः ।
स प्रण्यपप्तच्चपलं धरण्यां
प्राप्याधिकार्तस्वरतां तदानीम् ॥ ६९ ॥

अथ श्रीमानेनं कनकनिकरं स्वाधिकभरं
द्विजातिश्रेणीसादकृत सपयोगन्धकुसुमम् ।
किमाश्चर्यं वञ्चिक्षितिपतिरकार्षीन्न कमपि
स्वधर्मैकासक्तः क्षितिसुरमनष्टापदमिति ॥ ७० ॥

नृपतिरथ वितीर्य दक्षिणार्थे
पुरटभरं पुरुहं पुरोहिताय ।
अवभृथकलशाभिषेकपूतः
परिगतवानरविन्दनाभगेहम् ॥ ७१ ॥

समुपास्य सारसविलोचनं पुनः
स्वनिवेशनं विविशिवान् विशाखराट् ।

१ घटेम्. २ स्वामिभक्तो हि स्वाम्यपेक्षयान्यस्योन्नतिं न सहते. ३ पूर्णम्, अथ च आपत्त्यसहितं यथा तथा. ४ अधिगतस्वर्णत्वं अधिकदीनस्वरत्वं च. ५ अलुप्तविपदं, अथच सुवर्णशून्यम्. ६ स्वर्णभरम्. ७ 'पुरुहं पुरु भूयिष्ठं' इत्यमरः. ८ प्रदक्षिणीकृतवान्. ९ प्रविष्टः.

परितोषितानकृत पारितोषिकैः
परिचारकांश्च सुहृदोऽधिकारिणः ॥ ७१ ॥

श्रीकण्ठीयशिरःकुटीरहरिणाङ्काभैर्यशोराशिभिः
श्रीखण्डद्रवचर्चितामिव[2] विधायाशावधूमण्डलीम् ।
श्रीवञ्चीश्वरवंशमौक्तिकमणिः सोऽयं कृतार्थो नृपः
श्रीमानर्पयति स्म पद्मनयनायात्मानमानन्दवान् ॥ ७२ ॥

जातः केरलमण्डलोदरगते श्रीपर्पभूपान्वये
ख्यातः केरलवर्मराज इति यः श्री[illegible]नीपाधिः ।
सेतुस्नानतुलापुमर्पणविधौ नेतुर्विवृण्वन्नगा-
द्विंशस्तस्य कृतौ विशाखविजये सर्गोऽन्तिमः पूर्णताम् ॥ ७४ ॥

इति श्रीविशाखविजये विंशः सर्गः.

समाप्तं चेदं काव्यम्

शुभमस्तु.

---

१ मङ्गलबाहुल्यार्थं काव्यादाविव काव्यान्तेऽपि श्रीशब्दश्रुति[illegible]सम्पादिता. अत्र प्रतिसर्गमाद्यन्तपद्ययोः श्रीशब्दप्रयोगनियमश्चादृतः. २ चन्द[illegible]तामिव.

शुभम्.